कृष्णदास संस्कृत सीरीज–२६

॥ श्रीः ॥

# वृत्तरत्नाकरम्

'सेतु' 'नारायणी' 'बालक्रीडा' त्रयोपेतम्

हिन्दी-टीकाकारः
आचार्य मधुसूदन शास्त्री




कृष्णदास अकादमी, वाराणसी-२२१००१

कृष्णदास संस्कृत सीरीज

२६

केदारभट्टविरचितम्

# वृत्तरत्नाकरम्

भास्करभट्टविरचितसेतुना, नारायणभट्टनिर्मितनारायण्या
आचार्यमधुसूदनशास्त्रिकृतबालक्रीडया संवलितम्

सम्पादक एवं टीकाकार:
**आचार्य मधुसूदन शास्त्री एम० ए०**
एक्स-डीन-फैकल्टी आफ दी ओरियन्टल लर्निङ्ग बी. एच. यू. वाराणसी
पञ्चदशसहस्रादिरूप्यकविशिष्टपुरस्कारैः यू०पी० सरकारेण सम्मानितः




कृष्णदास अकादमी, वाराणसी

१९९४

॥ श्रीः ॥

# अथ काश्चन प्राचां वाचः ।

वृत्तरत्नाकरम् इति ग्रन्थरत्नम् । तद्धि सेतुनारायणीबालक्रीडेति संस्कृतहिन्दीटीकाभिः समर्द्धितं विधाय तस्मिन् विषये बालानां नादानानां [न आददते उपदेशं न गृह्णन्ति ये ते नादानाः शास्त्रार्थं बोद्धुमसमर्थास्तेषाम् ] आदमिनाम् [ आसमन्ताद् दम इन्द्रियाणां दमनं येषामस्ति ते आदमिनस्तेषाम् ] मानवानां सुखबुद्धये काश्चन प्राचां वाचः प्रस्तूयन्ते ।

वृत्तानां रत्नाकरः समुद्रः । अथवा वृत्ते रत्नाकरत्वारोपात् रत्नाकराभिन्नं समुद्राभिन्नं वृत्तम् । तस्य पारं गन्तुं सेतुरावश्यक इति सेतुटीका समञ्जसा । वृत्तान्येव रत्नानि तेषामाकरः खनिरित्यर्थं समर्थयितुं नारायणी टीका सुबोधना बहुपदार्थ-ग्रथितत्त्वात् । मूलस्य टीकयोश्च बालेभ्यः संज्ञापने क्रीडनाय बालक्रीडा हिन्दीटीका सुसङ्गतेति सममिह सङ्कलितम् ।

तत्र वृत्तं नाम किम् । वर्त्तनाद् आचरणाद् वृत्तमाचारः किम् । सतां वृत्तमनुष्ठितमिति मनोः । अथवा यदवर्त्तिष्ट यदभूत् तद् वृत्तं भूतं किम् । अत्रोच्यते-वृत्तं छन्दः प्रकृते—

तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् । वृत्तरत्नाकरं नाम बालानां सुखबुद्धये ।

इति प्रकृतग्रन्थकारः केदार आह । तदुपजीव्यः पिङ्गलछन्दः शास्त्रस्य वृत्तिकारो हलायुधोऽपि जगाद स्ववृत्तौ मृतसञ्जीवन्यां यथा—

श्रीमत्पिङ्गलनागोक्तछन्दःशास्त्रमहोदधौ ।
वृत्तानि मौक्तिकानीव विचिनोमि यथामति ।

एवमेव वृत्तच्छन्दसोः पर्यायशब्दत्वं छन्दःकौस्तुभे, छन्दोमञ्जर्यां, श्रुतबोधे चाचार्या ववदुः ।

अहो मघवा मूलं विडौजा टीकेतिवद् वृत्त ( जातम् ) वृत्तम् । यथा मघवेतिपदस्य अर्थमजानन् कश्चित् पृच्छति-ननु भोः मघवा कः पदार्थः ।

तदर्थं विवण्वन् यदि कश्चिद् वदेत् मघवेतिपदस्यार्थो विडोजा इति । तत्र मघवानमेव यो नहि जानाति स बिडौजसं ज्ञातुं कथं प्रभविष्यति । तद्वद् वृत्तपदस्यार्थं कथं जानीयात् । छन्दः यो न जनाति स तदर्थं प्रयुक्तस्य छन्दः शब्दस्यार्थं कथं जानीयादिति । ननु स्पष्टमक्लिष्टमुत्कृष्टतयाऽऽचष्टताम् । वदामि भोः । संशृणु—

यदि आल्हादे इत्यस्मात् "चन्देरादेश्च छः" इत्युणादिसूत्रेणासुन् प्रत्यये आदेश्चकारस्य स्थाने छादेशे कृते सति छन्दःशब्दो निष्पद्यते । तेन आनन्दसाधनं मनोऽनुरञ्जनकरं चित्तप्रसादजनकं वाग्वैभवं छन्दः । अत्रायं मतस्य लवो मतलव आशयः । सच्चिदानन्दात्मकस्य ब्रह्मणः सर्वस्मिन् जगति प्रकाशो वर्त्तते । परं मायायाः शुद्धयशुद्धयोस्तारतम्येन प्रकाशस्य तारतम्यमस्ति ।

यथा घटपटादिषु सदंशस्यैव प्रकाशः । कीटपतङ्गपशुपक्षिप्रभृतिषु सदंशस्तु अस्त्येव चिदंशोऽप्यस्ति परं स्वल्पः अनुत्कृष्टश्च । चिदंशो नाम ज्ञानांशः वागंशश्च । चित्शक्तिरेव वाग्वै तेज इति वाग्देवता सरस्वतीति। चिदुत्कर्ष एव आनन्दस्योदये हेतुः कारणम् । कारणभूतायास्तस्याः स्वल्पत्वादेव अनुत्कृष्टत्वादेव च आनन्दांशस्तेषु सन्नपि स्वल्पीयानेव अतिशयेन स्वल्प एव । तत एव ते वक्तुं न पारयन्ति स्मितं कर्त्तुं हसितुञ्च न प्रभवन्ति । मनुष्येषु ते त्रयोऽप्यंशाः । त्रिष्वपि चिदंशानन्दांशयोः स्वल्पता बहुलता अनुत्कृष्टता उत्कृष्टता मनुष्येषु अपेक्षा कृता । अतः कश्चिन् महान् । कश्चिन्मध्यमः । कश्चिदधमश्च । मनुष्येषु वाग्देवता ज्ञानाधिष्ठात्री अक्षरसमाम्नायरूपेण वर्णमालास्वरूपेण प्रकटा भवति । अत एव ते तैरक्षरैः वर्णैः सूक्ष्मातिसूक्ष्मविचारान् कर्तुं समर्थाः सन्ति । परत्र संक्रामयितुञ्च शक्ताः । विचाराणामादानप्रदानाभ्यां समुन्नतिं विधातुं प्राग्रसराः भवन्ति । सुनियोजितैः परमोक्तैस्तैः परान् तोषयन्ति च । तेषां सुश्लिष्टोच्चारणेन लोकान् आकर्षयन्ति च । तुष्टेराकर्षणस्य च कारणं तत्र तेषां गुणानां कर्मणां स्वभावानां शक्तेः स्वाध्यायस्य विद्यानां च वर्णनं भवति ।

संतुष्टाः आकृष्टाश्च सन्तो महान्तः पूज्याः शुभाशिषं वदन्ति । राजानो धनाढ्याश्च गां भूमिं हिरण्यादिकञ्च ददते । अन्ये भिन्ना अपि अभिन्नाः सहयोगिनो जायन्ते । परे चापरे स्वीयाः भवन्ति समर्थकाः भवन्ति । देवाः शुभां मतिं गतिञ्च प्रयच्छन्ति । विनाशकारिकीं विपरीतबुद्धिं निवारयन्ति । ननु वर्णने पद्यात्मतां गमितेषु तेषु अक्षरेषु वर्णेषु सुयोजना का, तेषामुक्तौ परमत्वं किम्, उच्चारणे सुश्लिष्टत्वं किम् तत्राह—गुरुलघुरूपतया उच्चार्यमाणानां तेषामक्षराणां वर्णानां मात्राणाञ्च नियमितत्वम् । अथ च पौर्वापर्यं नियतत्त्वम् । वर्णा ईदृशा वा इयन्तो वा सन्तु तेषां पूर्वत्वं अपरत्वं वा भवतु । परं या मात्रा अपेक्षितास्ता इयत्य एव सन्तु नानियत्यः सन्तु ईदृश्य एव नानीदृश्यो इत्यतो मात्राछन्दस्त्वेन तान् व्यवहरामः । मात्राः कियत्य एव भवन्तु अल्पा वा बहुला वा । ये वर्णा अपेक्षितास्ते ईदृशा एव इयन्तश्च सन्तु । इत्यतो वर्णच्छन्दस्त्वेन तेषु व्यपदेशः । प्राधान्येन व्यपदेशा भवन्तीति न्यायात् । तस्माद् वृत्तं छन्दस्तस्य विधे द्वे एव ।

मात्राछन्दः वर्णच्छन्द इति । प्रकृतग्रन्थे वृत्तरत्नाकरे केदारेणापि तत्तथैवोक्तम्—

मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते । इति आरम्भे ।

लक्षणं सर्ववृत्तानां मात्रावर्णानुपूर्वकम् । इत्यन्ते च ।

आर्यादिषु अतिरुचिरान्तेषु छन्दःसु गुरवो लघवश्च मात्रारूपेण सङ्गृहीताः । समादिदण्डकान्तेषु वृत्तेषु ते वर्णरूपेण सम्मानिता । अतो मात्रा वर्णविभेदेनेति मात्रावर्णानुपूर्वकमिति चोक्तम् । सर्वं सुस्थम् ।

आर्यादिरुचिरान्तासु मात्रासु वृत्तछन्दसी ।
समादिदण्डकान्तेषु वर्णेषु वृत्तछन्दसी ॥
इत्येवं व्यवहारेण सर्वत्रात्रैव तत्र हि ।
वृत्तस्य छन्दसश्चैव पर्यायत्वं बुधैः स्मृतम् ॥

एवं छन्दःशब्देन वृत्तशब्देन सामान्यतो व्यवहारः । तथा च वर्णवृत्तं वर्णच्छन्दः इति मात्रावृत्तं मात्राछन्द इति च वृत्तछन्दसोः पर्यायवाचकत्वं;

नास्मिन् संशीतिलेशः। इदमेव कथनं शुद्धं शोभनञ्च। अन्यत्सर्वमटरस्य पटरमेव। (अट पट गतौ। अटं गतिं राति आदत्ते यस्तस्य पटं गतिं राति आदत्ते अर्थात् अटनमेव कुरुते न तु शास्त्रस्य गुरोश्चादेशं राति आदत्त इति नादानतैव।)

यत्तु—

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेदिति॥

केनाप्युक्तं तत्र यदि मात्राकृता जातिस्तर्हि इन्द्रवज्रोपेन्द्रवज्रयोः लक्ष्मणा युक्तौ यदीयौ पादौ भवतस्ता उपजातयः। इति। तथा अन्यास्वपि जातिषु मिश्रितासु इदमेव नामेति च किम्वुक्तम्।

यतो हि त्वदीयोक्त्यनुसारन्तु इन्द्रवज्रोपेन्द्रवज्रे अक्षरसंख्यातत्वाद वृत्तेते। अतस्ते जातिपदेन कथं व्यवह्रियेताम गृह्येताम्। सखि; मे चतुरो भर्त्ता स्वलिखितं स्वयं न वाचयति इति स्मारयति। स्वोक्तं न बुध्यते पागलः (पा धातोः क्विपि पाः। पां गलयति इति पागलः।)

एवमेव गणच्छन्दः मात्राछन्दः अक्षरच्छन्दः इति त्रेधेति कोऽपि उवाद तदपि कण्डममेव (कडि मदे भेदने च धातोरमन्प्रत्ययेन निष्पद्यते) मत्तप्रोक्तमेवेत्यर्थः। किमार्यादीनि गणच्छन्दांसि। किं मगणनगणादि गणैर्निर्मितानि मो मो गो गो विद्युन्मालेति नोऽम्बुधेर्न विपुलेति प्रभृतीनि गणच्छन्दांसि न। अत्र किं विनिगमकम्। आर्यादिषु लः समुद्रा गण इति दिशा चतुर्भिर्लघुभिरेको गणो निष्पद्यते। ते च ऽऽ १ ॥ ऽ २ । ऽ । ३ ऽ॥ ४ ॥॥ ५ इमे पञ्चैव। एभिरार्यादीनि निष्पद्यन्ते। मगणनगणादयोऽष्टौ प्रसिद्धा गणाः। ते यथा

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादि लघुर्यः।
जो गुरुमध्यगतो रलमध्यः सोऽन्त्यगुरुः कथितोऽन्त्य लघुस्तः॥

ऽऽऽ म. ।।। न. ऽ।। भ. ।ऽऽ य. ।ऽ। ज. ऽ।ऽ र. ।।ऽ स ऽऽ। त.।

इति। एभिः समार्धसमविषमाणि वृत्तानि तथा दण्डकादयश्च निष्पद्यन्ते।

अत्र तत्र सर्वत्र गणाः सन्ति। गणानां स्वरूपमुपरि निर्दिष्टं समानं तत्। गुरु लघुघटिततया गणैः छन्दोऽव्यवस्थापि समानैव।

यदपि अक्षरच्छन्दः मात्राछन्दः अक्षरगणच्छन्दः मात्रागणछन्दः इति चतुर्धेति दधार कश्चित् तदपि अण्ड वण्डम् (अण धातोः वन धातोश्च अमन्ताड् डः इत्यौणादिको डप्रत्ययः) दत्तोत्तरत्वात्।

यत्तु पद्यं चतुष्पदीत्यन्ये तत्तु गडवडमेव ( गडश्च वडश्चानयोः समाहारः गडवडम्। गड सेचने धातोः वडि विभाजने धातो रचि समाहार द्वन्द्वे साधु ) यत आर्यादिषु स्वरा अर्धश्च आर्यार्द्धम्। इति पैङ्गलम्। आर्याशकलद्वितयमिति रत्नाकरम्। अतः पूर्वार्द्धोत्तरार्धाभ्यां द्विपदी पद्यं नहि चतुष्पदीति।

छन्दः शब्दस्यानेकेऽर्थाः। छन्दो वेदः श्रोत्रियंश्छन्दोऽधीते इति बहुलं छन्दसि इति। एवं छन्दसि इति पदघटितानि ५० पञ्चाशत् सूत्राणि।

युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् इत्यादिस्मृतिषु।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिवेति काव्येषु च प्रयोगदर्शनात्॥

छन्द इच्छा रुचिः —

मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि ! इति रामायणे।
छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृताः॥ इति काव्ये

छन्दः आच्छादनम् —

छन्दांसि आच्छादनात्। इति वाक्यतः। आच्छादनं वर्षातपाभ्यामात्मनः छत्रेण आवरणम् १ शीतादात्मनो रक्षार्थं वस्त्रेण प्रावरणम्।२। छदिभिः छप्पर छातेति ख्यातैः गृहस्य शीतातपवर्षाणामपवरणमित्यादि बहु अर्थ जातं तत्रकोषेषु प्रसिद्धम्।

प्रकृते छन्दः —

द्वयोः पादयोः। चतुर्षु पादेषु वा पौर्वापर्यनियमेन गुरुलघुघटितानां पञ्चानां गणानां मात्रारूपेण तादृशानामेव मगणादीनामष्टानां गणानां

वर्णरूपेण च विन्यासः। द्वयोः पादयोरित्युक्तिः आर्याद्यभिप्रायेण पिङ्गलादिभिः प्राचीनैः केदारादिभिरर्वाचीनैश्च स्वस्वग्रन्थेषु तथैव व्यवहारात्। कालिदासः केवल श्रुतबोधे यस्याः पादे प्रथमे द्वितीये तृतीये चतुर्थके इत्यूचे। अतः चतुर्षु पादेषु स तेषां विन्यासं ववाञ्छ।

एवम्भूतैः सुमतैः शृङ्खलाबद्धैः गणैर्घटिततया चदि आह्लादे धातोः निष्पन्नत्वात् आह्लादकमित्यन्वर्थनामकं छन्दः संगीतमिव स्वरैरिव रसं प्रवाहयति। संगीते यथा तालो लयो विरामो भवति तथेहापि यतिविच्छेदो विरामो भवति। रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी इत्यादि प्रक्रियया। नियतमात्रावर्णकन्दलितछन्दोबद्धानां पद्यानां वारं वारं पठितुर्जनस्य उद्देश्ये लक्ष्ये सेव्ये तल्लीनता भवति। उद्देश्योऽपि सेव्योऽपि तस्मै प्रसीदति प्रसद्य तस्य स्पृहां प्रपूरयति। भगवान् दीनदयालुः परमेश्वरोऽपि जीवानां कल्याणाय स्वीयं पवित्रं ज्ञानं वेद गायत्र्यादिछन्दोभिः सम्वलितमुपदिदेश। तत एव लोकेऽपि छन्दांसि प्रचरन्ति स्म वैदिकानि छन्दांसि देववाण्याम् लौकिकानि छन्दांसि लोकवाण्याम्। इति व्यवहारः प्रचचाल। संस्कृता वाणी द्विविधा। एका देववाणी द्वितीया मनुष्यवाणी। देववाणी वेदे। मनुष्य वाणी मनुष्येषु। वैदिकी वाणी एव देववाणी। उभौ पर्यायशब्दौ न तु मनुष्यवाणीदेववाणी शब्दौ पर्यायौ। एकार्थतायां तयोः प्रयोगं कुर्वन्ता भ्रान्ताः सर्वे अ धुनिकाः। रामायणे सुन्दरकाण्डे हनुमानाह—

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्
रावणं मन्यमाना मां सीता भीता भविष्यति।
अतो वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्। इति।

निरुक्तेऽपि—द्विविधां वाचं ब्राह्मणा वदन्ति। या च देवानां या च मनुष्याणाम्। इति वाण्यां संस्कृतापदस्य व्यवहारः सर्वप्रथमं रामायणतो लोके प्रचचाल। अतः प्राङ् नासीत् संस्कृतेतिव्यवपदहारो वाण्याम्। ततः। परं पुराणेऽपि शूद्रः संस्कृतां नोच्चरेद्गिरमिति।

अथ लौकिकम्। ४।८ इति पिङ्गले सूत्रम्। तत्र हलायुधस्य वृत्तिः। अधिकारोऽयमा शास्त्रपरिसमाप्तेः पूर्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृति

आर्यादीनां चूलिकापर्यन्तानां छन्दसां लौकिकत्वमेव। समान्यदीनामुत्कृति-पर्यन्तानां वैदिकत्वं लौकिकत्वञ्च। स्मृतिपुराणेतिहासेषु दृश्यमानानामार्यादि-दण्डकपर्यन्तं लौकिकछन्दोजातमभिक्रियते। तन्मूलत्वाच्छन्दोमूलत्वात्पद्यका-व्यस्य। पद्यकाव्यञ्च आनन्दहेतु। चदि आल्हादे धातोर्निष्पन्नेन आल्हादकार्थक छन्दसा निबद्धत्वात्तस्येति।

व्याकरणेऽपि पाणिनीये—लोके वेदे च एङन्तस्य गोरवङ् पदान्ते भवति प्रकृतिभावो वा भवति। "छन्दसि" इति "भाषायाम्" इति च पृथक् २ व्यवहाराद् देववाणी संस्कृता भिन्ना। मनुष्यवाणी संस्कृता भिन्ना। एवं भेदे सत्यपि संस्कृतां भाषां देववाणीति व्यवहरन्तो दृश्यन्ते ये जनास्ते सर्वेऽपि नादाना बुडवाकाः [ बुडिति वाकः शब्दो येषां ते बुडवाकाः। नमोवाकं प्रशास्महे इति। सुरशुभवाके नहि गुणदोषौ इति च प्रयोगात् वाकः शब्दपर्यायवाचकः ]

छन्दोबद्धरचनायाः पञ्च फायदाः सन्ति। [ अब्दादयश्चेति औणादिक सूत्रेण निपातितोऽयं फायद शब्दः। यथा कु धातोः कुन्दः। तुद धातोः तुन्दः। वृधातोः वृन्दः। एषु दप्रत्ययो नुगागमो गुणाभावश्च निपात्यन्ते। तथा स्फायी धातोः द प्रत्ययः अगागश्च निपात्येते तथा स्कोः संयोगाद्योरन्ते चेति सूत्रेण झल्रूपे फकारे परे सति संयोगादिभूतस्य सकारस्य लोपे सति फायद इति रूपं निष्पद्यते। लौकिक्याः संस्कृतभाषाया फायद इति शब्द एव हिन्दीभाषायां साम्प्रतं फायदा इत्येवं स्त्रीलिंगे व्यवह्रियते। लिङ्गमशिष्यं लोकाश्रयत्वल्लिङ्गस्येत्युक्तेः ]

प्रथमः फायदश्छन्दोबद्धस्य पठने पाठने आनन्दोऽनुभूयते। द्वितीयः पद्यानां कण्ठस्थीकरणं सुकरं भवति। गद्यस्य तथा करणं मुश्किलमेव [ ऊषशुषिमुष्कमधोरः इति सूत्रोक्तमुष्कशब्दादिलचि मुश्किल इति निष्पद्यते ] कण्ठस्थीकृतानि पद्यानि स्मरणे सुखेन आयान्ति आयास्यन्ति आयासीच्चेति सर्वेषां विज्ञानामनुभवः। तृतीयः पद्यमयग्रन्थीयानां पद्यानां

गणना भवितुमर्हा । तथा करणाच्च ग्रन्थादौ ग्रन्थान्ते वा इयत्प्रमाणं शास्त्रस्येति लेखितुं पार्यते । यथात्रैव लेखनं कृतम्—

षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षड्त्रिंशदधिकं शतमिति ॥

चतुर्थः फायदः—छन्दांसि विज्ञाय पठने दोषाणामपवारणं भवति । पठितुः शुभं वर्द्धते । अज्ञात्वा पठने पाठको दोषभाग् जायते । सदोषं छन्दः प्रणीतं पद्यमर्थानां प्रकाशने नितान्तमसमर्थम् । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । इतिवत् ।

स्वरा उदात्तादय तेभ्यो हीनः मंत्रो वेदे । स्वर उच्चारणविशेषः । तेन हीनं भ्रष्टं लौकिकं पद्यम् । वर्णत इति मात्राया अपि उपलक्षणम् । तेन वर्णहीनता मात्राहीनताऽपि उभयत्र दोषः । दोषयुङ् मिथ्या भवति । एवं मिथ्याप्रयुक्ततया ते वाञ्छितमर्थं वेदे न मन्त्र आह न च पद्यं लोके आह । इतो दोषवर्जनपुरः सरं पठनोयम् । तेन पुण्यावाप्तिरर्थावाप्तिश्च ।
श्रुतावपि स्मृतावपि तदेवाह—

यो हवा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वा ऋच्छति गर्तं वा पात्यते प्रमीयते वा पापीयान् भवति अथ यातयामानि अस्य छन्दांसि भवन्ति । अथ यो मंत्रे मन्त्रे वेद स सर्वमायुरेति श्रेयान् भवति । अयातयामान्यस्य छन्दांसि भवन्ति । तस्मादेतानि मंत्रे मन्त्रे विद्यात् । इत्यार्षेयब्राह्मणाम् १ । श्रुतिः

अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च
योऽध्यापयेद्यजेद्वापि पापीयान् जायते तु सः । इति स्मृतिः ।

अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत् । अथ योऽर्थवित्तस्य वीर्यवत्ता भवति । जपित्वा हुत्वा इष्ट्वा तत् फलेन युज्यते । इति कात्यायनः ।

नाट्यनृत्यवाद्यगेयवेदानामुत्तरोत्तरस्य : पूर्वपूर्वोपकारकत्वमित्यनेनापि छन्दो वेदस्य सर्वोपकारकत्वं प्राप्तं भवति । यतो हि गेयवेदश्छन्दोघटितत्वात्

त्कार्य कारणयोरभेदात् छन्दो वेद एवेति पञ्चमः फायदोऽस्य छन्दसः ।

छन्दः शिल्पमिति श्रुतिः । शिल्पं चतुःषष्टिकलासु परिगणिता एका कला एव । एतदनुसारं शिल्पाभिन्नछन्दसा निबद्धानां पद्यानां रचयिता कविः शिल्पी । तस्य कर्म काव्यं शिल्पं कला । अत एव कलासीमा काव्यमिति सुतथा प्रथा जगति जागर्त्ति ।

देववाण्यां वेदे ब्राह्मणे उपनिषदि आरण्यके च प्रथितं छन्दः । मनुष्य वाण्यां स्मृतिधर्मशास्त्रपुराणेतिहासायुर्वेदगन्धर्ववेदनटचवेददर्शनादिषु लोके कुतः छन्दःप्रसृतिरिरिति विचारणायां यादवप्रकाशाभिधा पिङ्गलछन्दः सूत्रव्याख्या अग्रेसरा वर्वर्ति ।

तथाहि—

छन्दोज्ञानमिदं भवाद्भगवतो लेभे सुराणां पतिः ।
तस्माद् दुश्च्यवनस्ततस्तु भरतो माण्डव्यनामा ततः ।
माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गलः ।
तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः कृतम् इति ॥

इदानी प्राप्यमाणाश्छन्दोग्रन्था छंदोमञ्जरी गङ्गादासकृता । क्षेमेंद्रकृतं सुवृत्ततिलकम् । छंदःकौस्तुभः । कालिदासकृतः श्रुतबोधः । केदारभट्टविरचितं वृत्तरत्नाकरम् । भानुकविकृतः छदःप्रभाकरः ।

प्रचलितेषु ग्रन्थेषु वृत्तरत्नाकरमेव सर्वानतिशेते । प्रचीनैर्महामनीषिभिष्टीकाकारैर्मल्लिनाथादिभिः छंदोनिर्देशकरणे इदमेवादृतम् । एको विशेषोऽत्र वरीवर्ति । लक्ष्यं लक्षणञ्च एकेनैव वाक्येन बोधनीयम् । लक्ष्म ज्ञात्वा श्रुत्वा वा लक्ष्यगवेषणाय नान्यत्र गमनीयम् । द्वितीयो विशेषः अस्य ग्रन्थस्य प्रमाणमपि स्वल्पम् । अतो महदुपकारकम् ।

अस्य टीका नारायणी विस्तृता बहुपदार्थघटितेति सुप्रथिता । सेतु टीका अप्रथिता । इदानीमेव प्रकाशमाना वर्त्तते । मत्पार्श्वे हस्तलिखिता प्रतिरस्ति । सम्पूर्णानंदसंस्कृतविश्वविद्यालयेऽपि अस्या प्रतिरस्ति ।

इयं नारायणीटीकां समालोचयति क्वचित्। क्वचित् सुल्लक्षण-मपि कश्चित्पण्डितं समालोचयति स्वयं दोषग्रस्ताऽपि। अस्याः समीक्षा मया पदे पदे टिप्पणीरूपेणण् कृता। वृत्तरत्नाकरस्य हिन्दीटीका बालक्रीड़ा मया विरचिता। गुरुबालकृष्णस्य नाम्ना इयं टीका मदीयेषु सर्वेषु ग्रन्थेषु व्यक्तिविवेकं विहाय राराजते। व्यक्तिविवेके तु मधुसूदनीसंस्कृतटीका एव।

सहृदयाः पाठकाः! स्तुतिश्च परमोक्तय एव। यदुक्तम्। त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः। इति विचिन्वतु, श्रमसाफल्यं विदधतु; प्रार्थनैषा मदीया। यथाज्ञानं कृतं समीक्षितञ्च।

वागंशस्य पद्यरूपतायामुत्कर्ष एव स्तोत्रं स्तुतिः। तच्च आनन्दाश-स्योदये हेतुः। तत एव सुतथा प्रथितिः "स्तोत्रं कस्य न तुष्टये" इति।

स्तुताः सन्ताः महन्ताः [ अस् धातोःझचि सन्तः। बहुवचने सन्ताः। मह धातोः झचि महन्ताः। वसन्त वेशन्तः इतिवत् साधुत्वम् ] तुष्टा भवन्ति। तत्र परमोक्तयः पद्यस्वरूपा एवेति।

भवतां विदुष्मतामाश्रवः आचार्यमधुसूदनशास्त्री एम्० ए० प्राचीन डीन, फैकल्टी आफ दि ओरियण्टललर्निङ्ग B. H. U. वाराणसी।

मधुसूदनशास्त्री भवन। मदैनी, वाराणसी।

॥ श्रीः ॥

# —एक चर्चा—

वृत्तरत्नाकर और श्रुतबोध ये दो प्रकृत ग्रन्थ हैं इनके विषय में हमारी एक माने मुख्य चर्चा माने अध्ययन है। एके मुख्यान्यकेवलाः इस अमर कोष के अनुसार एक शब्द का अर्थ मुख्य हैं। चर्चनं चर्चा। चर्च अध्ययने धातु से "षिद्भिदादिभ्योऽङ्" इस सूत्र से अङ् हुआ। फिर स्त्रीत्वात् टाप् प्रत्यय होने से चर्चा बना इसका अर्थ है अध्ययन। नारायण भट्ट ने वृत्तों पर रत्नों का आरोप करके वृत्त रत्न ही है ऐसा अर्थ माना है उनका आकर खजाना यह प्रकृत ग्रन्थ है। अतः इस खजाने का विवरण करने के लिए भट्टजी ने विवृति लिखी है। भास्कर भट्ट ने वृत्तों का रत्नाकर समुद्र यह गन्थ है ऐसा अर्थ मानकर उसके पार जाने के लिए सेतु टीका लिखी है। हमने इस पर बालक्रीड़ा हिन्दी टीका लिखी है। बालकृष्ण गुरुजी के नाम का स्मरण बना रहे हैं इसलिए अपने सभी ग्रन्थों पर बालक्रीड़ा टीका लिखी है। व्यक्तिविवेक पर नहीं लिख सके। उस समय में हिन्दी टीका करने का ध्यान नहीं हुआ था। अस्तु।

यहाँ प्रकृत ग्रन्थ के नाम 'वृत्तरत्नाकर' में उल्लिखित वृत्त शब्द के अर्थ का विचार करते हैं। महाकवि कालिदासने

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।

अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ५।।३३।

वृत्त में स्थित साधारण राजा की भी भूमि यदि मन चाहे पदार्थों का प्रसव करती है तो उसमें क्या आश्चर्य है। हे रघुराज ! तुह्मारे

विषय में क्या कहें तुम्हारा तो प्रभाव अचिन्तनीय ही है क्योंकि तुमने तो स्वर्ग को भी कामसू मन चाहे पदार्थों का प्रसव करने वाला बना दिया।

इस पद्य में राजा का विशेषण वृत्त में स्थित दिया है। टीकाकारों ने वृत्त का अर्थ नियम मर्यादा लिखा है। भगवान् रामचन्द्र अपने वृत्त के नियम के बदौलत ही मर्यादा पुरुषोत्तम कहलाये।

इसी तरह प्रकृत में भी गुरु लघु एवं यति का नियम वृत्त है अत एव नियम बद्ध होने से ही पद्यात्मक काव्यों में वह वृत्त आह्लाद का साधन होता है अतः उसे छन्द कहते हैं। क्यों कि छन्दः यह शब्द चदि ह्लादे धातु से चन्दति हृष्यति आह्लादितो भवति येन जिससे हृष्ट होता है आह्लादित होता है इस विग्रह में "चन्देरादेश्च छः" इस उणादि सूत्र से असुन् प्रत्यय और आदि के चकार के स्थान में छकार होने से बनता है। प्रकृत ग्रन्थ में वृत्त शब्द का छन्द अर्थ लिखा है। "तेनेदं क्रियते छन्दो वृत्तरत्नाकरं नाम" वह केदार वृत्तरत्नाकर नाम वाले छन्द को करता है। छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम्। उस केदार ने वृत्तरत्नाकर आख्या वाले माने नामवाल इस अभिराम मनोहर छन्द की प्रकृष्ट विरचना की है। इस तरह वृत्त एवं छन्दः दोनों पर्याय हैं।

जैसे संगीत में राग-रागिनियों में स्वर लहरी से रस बहने लगता है। स्त्रियों के रोने में भी स्वर लहरियों के रहने से एक विलक्षण रस की अनुभूति होती है। उसी तरह द्विपद एवं चतुष्पद रूप पद्य काव्य में वृत्तों के वदौलत छन्दों के कारण वक्ता एवं श्रोता आनन्द को प्राप्त करता है आह्लाद का अनुभव करता है।

इसी लक्ष्य को समझाने के लिए वेदों में जिन छन्दों का वृत्तों का प्रयोग किया है वे छन्द वैदिक होते हैं उसी के अनुसार लो

छन्दों का व्यवहार होने लगा ये छन्द लौकिक होते हैं। वेद में गायत्री छन्द एक अक्षर दो अक्षर का भी होता है किन्तु लोक में वह गायत्री छन्द ६ ही अक्षर का होता है। वेद में छन्दोबद्ध पद्य त्रिपात् भी होता है। किन्तु लोक में वह द्विपात् एवं चतुष्पात् तथा दण्डक होता है। और वह वृत्त या छन्द मात्रा घटित एवं वर्ण घटित वस दो ही प्रकार का होता है। अतः—

पद्यं चतुष्पदी या पद्यं चतुष्पदं ऐसा प्राचीनों का लेख गड़बड़ है और वृत्तं जातिरिति द्विधा। वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् यह सब भी गप्पाष्टक ही है। क्योंकि आर्यादि छन्दों को पिङ्गलादि आचार्यों ने स्वरा अर्धञ्च आर्याद्धम्। आर्याशकलद्वितयम्। प्रथमेऽर्द्धे नियतमार्यायाः। शकलयोर्द्वयोर्भवति पादः इस तरह द्विपात् छन्द लिखे हैं। यद्यपि कालिदास ने चार पाद आर्या में लिखे हैं किन्तु जिन शिखा १ खञ्जा २ अनङ्गक्रीड़ा ३ अतिरुचिरा ४ छन्दों का स्वप्न भी कालीदास ने नहीं लिया वे छन्द द्विपाद होते हैं तथा गीति एवं उपगीति को द्विपाद ही लिखा है और इन्द्रवज्रा एवं उपेन्द्रवज्रा के मिश्रित लक्षणों से बने हुए छन्दों को भी जाति कहा है। जो वर्णों से ही बनते हैं। कहाँ वे मात्राओं से बनते हैं। जो जातिर्मात्राकृता भवेत् लिख दिया। अतः सब गप्पाष्टक है।

कालिदास ने तो आठ अक्षरवाले को पद्य लिखा है अतः पद्य की की परिभाषा इन सबसे अलग की है बह श्लोक भी और पद्य भी है। पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयदेतत्-पद्यस्य लक्षणम् यह पद्य का लक्षण श्लोक के लक्षण से मिलता जुलता है।

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पंचमम् द्विचतुः पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः। यहां सर्वत्र लघु पंचमम्। माने चारों पदों में

पंचम अक्षर लघु दोनों में समान हैं। श्लोक में षष्ठं गुरु ज्ञेयम् लिखा है और पद्य में षष्ठं गुरुं विजानीयात् श्लोक में छठे के गुरु समझो पद्य में भी छठे को गुरु समझो। द्विचतुः पादयोर्ह्रस्वं सप्तमम्। सप्तमं द्विचतुर्थयोर्लघु। इस तरह दोनों जगह में दूसरे एवं चौथे पाद में सप्तम ह्रस्व या लघु होता है लिखा है। सप्तमं दीर्घमन्ययोः। द्वितीय एवं चतुर्थ पाद से अन्य पादों में सप्तमं दीर्घ होता है यह श्लोक में प्रतिपदोक्त है। पद्य में यह अर्थात् आता है। मात्रा छन्द एवं वर्ण छन्द दो ही प्रकार के वृत्त होते हैं। तीसरा प्रकार नहीं होता है। तथा जाति कुछ नहीं है। मात्रा छन्द भी वर्ण छन्दों की की तरह सम एवं विषम पाद वाले होते हैं।

मात्रा छन्दों नें त्रिविध आर्यायें, त्रिविध चपलायें, चतुर्विध गीतियाँ नवविध वैतालीय, चतुर्विध वक्त्र, षड्विध विपुलायें होती हैं। ये विषम मात्राओं से बनते हैं। अचलधृति एवं मात्रासमक आदि शप्तविध एवं एकविध पादाकुलक ये सब सम मात्रा के छन्द हैं।

उक्तादि उत्कृतिपर्यन्त एक अक्षर से २६ अक्षरों वाले वर्ण छन्द सम छन्द हैं। जो संख्या में १०९ हैं तथा ९ प्रकार के दण्डक हैं। दण्डकों में २६ वर्णों के बाद की २७।२८ आदि वर्णों की संख्या होती है। इसके सिवाय १२ प्रकार के अर्द्धसम तथा ११ प्रकार के विषम वर्ण छन्द होते हैं। इसके बाद पज्झटिका एवं दोहा वगैरह गाथा कहलाते हैं।

इन छन्दों का काव्यों में विन्यास रसों के अनुकूल ही होता है। यह सिद्धान्त सर्वमान्य है जैसे—

वीरों की सेना के प्रस्थान का वर्णन दोधक वृत्त में होता है दोधक वृत्तमिदं भमभाद्गौ। ट्रेन का भी वर्णन इसी छन्द में होता है

जो भक भक करके चलती है। समुद्र में ज्वार भाटा का उथल पुथल का वर्णन तोटक छन्द में होता है।

इतिहासों में पुराण की कथाओं में उपदेश प्रधान काव्यों में एवं सामान्य सर्गबन्ध काव्यों में भी अनुष्टुप छन्द जिसको कालीदास ने श्लोक कहा हैं प्रशस्त है। सर्गबन्धों में इससे अन्य वियोगिनी सुन्दरी इन्द्रवज्रा उपेन्द्रवज्रा का प्रयोग उत्तम है।

शृङ्गारी नायिकाओं के तथा वसन्तादि ऋतुओं के वर्णन में उपजाति ही शोभा देती है चन्द्रोदय उद्यान और यौवनोद्गम प्रभृति उद्दीपक विभावों के वर्णन में रथोद्धता का उद्धरण होता है।

पणबन्ध सन्धि १ विग्रह लडाई २ यात्रा यान ३ उपेक्षा करना आसन ४ दूसरे का सहारा लेना संश्रय ५ एक के साथ लड़ाई करना दूसरों से सन्धि करना द्वैधी भाव ६ इन गुणों के वर्णन में, कोश खजाना दुर्ग किले का निर्माण और चतुरंग बल प्रभुशक्ति, विज्ञान सम्पत्ति, ऊहापोहमयी मन्त्र शक्ति, एवं पराक्रम करना उद्योग करना उत्साह शक्ति इन तीन शक्तियों के वर्णन में, इन तीन शक्तियों से उत्पन्न होनेवाली तीन सिद्धियों के सुखों के वर्णन में, तथा चय वृद्धि अपचय क्षय एवं चय और अपचय रहित अवस्था स्थान इन तीनों उदयों के वर्णन में वंशस्थ जतौ तु वंशस्थमुदीरितं जरौ की स्थिति ठीक होती है।

वीररस रौद्ररस के तथा उनके सांकर्य के वर्णन में वसन्ततिलका तिलक होती है। काव्यों में सर्ग की समाप्ति पर मालिनी उपयुक्त है।

उपपन्न माने उपपत्ति से युक्त अर्थों के परिच्छेद के विश्लेषण के समय में शिखरिणी मानी गई है। उदारता रुचिरता एवं

औचित्य के विचार में हरिणी वरा है श्रेष्ठ है ।

क्रोधमें में आक्षेप के साथ धिक्कार करते समय पृथ्वी कार्य-क्षम हैं भार सहने में समर्थ है ।

वर्षा ऋतु के वर्णन में परदेश में प्रवास के समय एवं व्यसन विपत्ति के वर्णन में मन्दाक्रन्ता का उपयोग होता है ।

राजाओं की शूर वीरों की स्तुति में शार्दूलविक्रीडित का अपयोग करना चाहिए ।

झंझावात के वेग के वर्णन में स्रग्धरा का सहारा लेना चाहिए।

सैनिकों को एवं छात्रों को कवायद कराने में द्रुतविलम्बित का प्रयोग करना चाहिए। क्योंकि कबायद में पैर को उठाना और पटकना होता है अतः वहाँ द्रुतत्व भी है तथा विलम्बितत्व भी है।

छन्दों में वृत्तों में गुण एवं दोष भी हो गये हैं जैसे श्लोक के चारों पादों में षष्ठ अक्षर गुरु तथा पञ्चम अक्षर लघु तथा पहले और तीसरे में सप्तम गुरु होना चाहिए ऐसा श्रुतबोध में कालिदास ने नियम लिखा है किन्तु उसका व्यभिचार स्वयं कालिदासके रघुवंशमें है।

१ २ ३ ४ऽ ५ऽ ६। ७। ८
जैसे-त द न्व ये शु द्धि म ति। यहां उक्त नियम का उलटा हो गया है। पाँचवाँ "शु" दीर्घ है और छठा "द्धि" ह्रस्व है और पहले में सातवाँ "म" लघु है।

"हरिणीप्लुता" छन्द कालिदास ने लिखा है, वृत्तरत्नाकरने हरिणप्लुता लिखा है, अन्य ने उपचित्रा लिखा है १२ अक्षरवाले छन्द के प्रथम एवं तृतीय पाद में एक अक्षर कम माने ११ अक्षर करने पर यह छन्द बनता है। इत्यादि बहुत सी स्थितियाँ छन्दों

में हैं इनको सझना चाहिए। १२ अक्षरवाले द्रुतविलम्वित के १ले एवं ३रे पाद मे १म अक्षर के कम माने ११ अक्षर करने पर हरिणीप्लुता बनता है ऐसा ही कालिदास ने श्रुतबोध मे लिखा है किन्तु शङ्कराचार्य ने देव्यपराधक्षमापनस्तोत्र मे--

जगदम्ब विचित्रमत्र किं परिपूर्णा करुणास्ति चेन्मयि
अपराधपरम्परावृतं नहि माता समुपेक्षते सुतम्।

इस छन्द में १म एवं ३य पाद मे १० अक्षर हैं और द्वितीय एवं ४र्थ पाद में ११ अक्षर हैं। इस अक्षर की कमी के सिंवाय इन पादो में छन्द भी भिन्न २ लक्षण वाले हैं।

अपराधसहस्रनाशिनी प्रणतिः सादरमर्प्यते त्वयि
अहमस्म्यपराधकृत्सदा भवतोऽन्यो न समीक्ष्यते क्षमः।

इस मेरे पद्य में भी यही स्थिति है।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्।

उपर्युक्त शंकराचार्य के और मेरे दो उदाहरणों पद्यों मे पहले और तृतीय पादों मे स. स. ज. गु. हैं अतः ये पाद १० अक्षरों वाले छन्द है। तथा द्वितीय एवं चतुर्थ पादों मे स. भ. र. ल और गुरु हैं अतः ये पाद ११ अक्षरों वाले छन्द के हैं। यद्यपि इन छन्दों का उपादान या उपन्यास लक्ष्य या लक्षण के स्वरूप में वृत्तरत्नाकर एवं श्रुतबोध आदि मे नहीं किया है तद्यपि १०२४ भेदों वाले १० अक्षर के छन्द का और २०४८ भेदों वाले ११ अक्षर के छन्द का यह कौनसा भेद है इसे उद्दिष्ट की प्रक्रिया से जान सकते हैं जैसे—

१ २ ४ ८ १६ ३२ ६४ १२८ २५६ ५१२
। ।ऽस.। । ऽस. । ऽ ।ज. ऽगु.
इस प्रक्रिया से यह १० का ३१७ वाँ भेद है।
१ २ ४ ८ १६ ३२ ६४१२८ २५६५१२ १०२४
। । ऽस. ऽ । ।भ. ऽ । ऽ । र. ल. ऽ गु.
यह ११ का ५८९वाँ भेद है।

| | |
|---|---|
| १ | १ |
| २ | २ |
| ८ | १६ |
| १६ | ३२ |
| ६४ | १२८ |
| २५६ | ५१२ |
| ३१६ | ५८९ |

मघुसूदनशास्त्री।

प्राचीन डीन, फेकल्टी आफ दि ओरियण्टल लर्निङ्ग
B. H. U. वाराणसी



# वृत्तरत्नाकरीयविषयानुक्रमणिका ।

## प्रथमोऽध्यायः ।


विषयाः

१ मङ्गलाचरणम्

२ ग्रन्थकर्तुः परिचयः

३ ग्रन्थस्यानुबन्धचतुष्टयम्

४ स्वग्रन्थस्य सन्मूलकत्व-
प्रतिपादनम्

५ ग्रन्थपरिमाणम्

६ छन्दः शास्त्रस्य दशाक्षराणि

७ गणलक्षणानि

८ मात्राच्छन्दोगणः

९ गुरुलघुलक्षणम्

१० क्रमसंयोगनिरूपणम्

११ क्रमसंयोगोदाहरणम्

१२ अब्धिप्रभृतिसंज्ञाः

१३ पादलक्षणम्

१४ यतिलक्षणम्

१५ युगयुक्संज्ञे

१६ वृत्तभेदकथनम्

१७ समवृत्तलक्षणम्

१८ अर्धसमवृत्तलक्षणम्

१९ विषमवृत्तलक्षणम्

२० वर्णसमवृत्तभेदाः

२१ दण्डकलक्षणम्

विषयाः

२२ गाथालक्षणम्

२३ उक्तादिपरिगणनम्

२४ अध्यायोपसंहारः


## द्वितीयोऽध्यायः

अथ मात्राछन्दांसि

### आर्याप्रकरणे


१ आर्यासामान्यलक्षणम्

२ पथ्यालक्षणम्

३ विपुलालक्षणम्

४ चपलालक्षणम्

५ मुखचपलालक्षणम्

६ जघनचपलालक्षणम्


### गीतिप्रकरणे


७ गीतिलक्षणम्

८ उपगीतिलक्षणम्

९ उद्गीतिलक्षणम्

१० आर्यागीतिः


### वैतालीयप्रकरणे


११ वैतालीयलक्षणम्

१२ औपच्छन्दसिकम्

विषयाः

१३ आपातलिका

१४ दक्षिणान्तिका

१५ उदीच्यवृत्तिः

१६ प्राच्यवृत्तिः

१७ प्रवृत्तकम्

१८ अपरान्तिका

१९ चारुहासिनी

**अनुष्टुप्प्रकरणे**

२० वक्त्रलक्षणम्

२१ पथ्यावक्त्रम्

२२ विरीतपथ्यावक्त्रम्

२३ चपलावक्त्रम्

२४ युग्मविपुला

२५ विपुला

२६ भविपुला

२७ रविपुला

२८ नविपुला

२९ तविपुला

**मात्रासमप्रकरणे**

३० अचलधृतिः

३१ मात्रासमकम्

३२ विश्लोकः

३३ वानवासिका

३४ चित्रा

३५ उपचित्रा

विषयाः

३६ उपचित्रा ( मतान्तरेण )

३७ पादाकुलकम्

३८ वृत्तानां गुरुलघुमात्रावर्णसंख्या-
परिज्ञानोपायाः

**द्विखण्डकच्छन्दांसि**

३९ शिखा

४० खञ्जा

४१ अनङ्गक्रीडा

४२ अतिरुचिरा

**तृतीयोऽध्यायः**

वर्णसमवृत्तानि

**उक्ता १**

१ श्रीः

**अत्युक्ता २**

२ स्त्री

**मध्या ३**

३ नारी

४ मृगी

**प्रतिष्ठा ४**

५ कन्या

**सुप्रतिष्ठा ५**

६ पङ्क्तिः

**गायत्री ६**

७ तनमध्या

विषयाः
८ शशिवदना
९ विद्युल्लेखा
१० वसुमती
उष्णिक् ७
११ मदलेखा
१२ कुमारललिता
१३ हंसमाला
अनुष्टुप् ८
१४ चित्रपदा
१५ विद्युन्माला
१६ माणवकम्
१७ हंसरुतम्
१८ समानिका
१९ प्रमाणिका
२० वितनाम्
वृहती ९
२३ भुजगशिशुभृता
पङ्क्ति १०
२३ शुद्धविराड्
२४ पणवः
२५ मयूरसारिणी
२६ रुक्मवती
२७ मत्ता
२८ मनोरमा
विषयाः
२९ उपस्थिता
त्रिष्टुप् ११
३० इन्द्रवज्रा
३१ उपेन्द्रवज्रा
३२ उपजातिस्वरूपम्
३३ सुमुखी
३४ दोधकम्
३५ शालिनी
३६ वातोर्मी
३७ श्रीः
३८ भ्रमरविलसीतम्
३९ रथोद्धता
४० स्वागता
४१ वृत्ता
४२ भद्रिका
४३ श्येनिका
४४ मौक्तिकमाला
४५ उपस्थितम्
जगती १२
४६ चन्द्रवर्त्म
४७ वंशस्थम्
४८ इन्द्रवंशा
४९ तोटकम्
५० द्रुतविलम्बितम्
५१ पुटः

विषयाः

५२ प्रमुदितवदना
५३ कुसुमविचित्रा
५४ जलोद्धतगतिः
५५ भुजङ्गप्रयातम्
५६ स्रग्विणी
५७ प्रियंवदा
५८ मणिमाला
५९ ललिता
६० मौक्तिकदाम
६१ प्रमिताक्षरा
६२ उज्वला
६३ वैश्वदेवी
६४ जलधरमाला
६५ नवमालिका
६६ प्रभा
६७ मालती
६८ अभिनवतामरसम्

**अतिजगती १३**

६९ क्षमा
७० प्रहर्षिणी
७१ अतिरुचिरा
७२ मत्तमयूरम्
७३ मञ्जुभाषिणी
७४ चन्द्रिका

**शक्वरी १४**

७५ असम्बाधा

विषयाः

७६ अपराजिता
७७ प्रहरणकलिता
७८ वसन्ततिलका
७९ वसन्ततिलकाया नामान्तराणि

**अतिशक्वरी १५**

८० शशिकला
८१ स्रक्
८२ मणिगुणनिकरः
८३ मालिनी
८४ प्रभद्रकम्
८५ एला
८६ चन्द्रलेखा

**अष्टिः १६**

८७ ऋषभगजविलसितम्
८८ वाणिनी
८९ पञ्चचामरम्

**अत्यष्टि १७**

९० शिखरिणी
९१ पृथ्वी
९२ वंशपत्रपतितम्
९३ हरिणी
९४ मन्दाक्रान्ता
९५ नर्कुटकम्
९६ कोकिलम्

**धृतिः १८**

९७ कुसुमितलतावेल्लिता

विषयाः

**अतिधृतिः १९**

९८ शार्दूलविक्रीडितम्

९९ मेघविस्फूर्जिता

**कृतिः २०**

१०० सुवदना

१०१ वृत्तम

**प्रकृतिः २१**

१०२ स्रग्धरा

**आकृतिः २२**

१०३ भद्रकम्

**विकृतिः २३**

१०४ अश्वललितम्

१०५ मत्ताक्रीडा

**संकृतिः २४**

१०६ तन्वी

**अतिकृतिः २५**

१०७ क्रौञ्चपदा

**उत्कृतिः २६**

१०८ भुजङ्गविजृम्भितम

१०९ अपवाहम्

**दण्डकप्रकरणे २९**

११० चण्डवृष्टिप्रपातः

११७ दण्डकभेदा अर्णादयः

११८ प्रचितकम

विषयाः

**चतुर्थोऽध्यायः**

**वर्णार्धसमवृत्तानि**

१ उपचित्रम्

२ द्रुतमध्या

३ वेगवत

४ भद्रविराट्

५ केतुमती

६ आख्यानकी

७ विपरीताख्यानकी

८ हरिणप्लुता

९ अपरवक्त्रम्

१० पुष्पिताग्रा

अपरवक्त्रपुष्पिताग्रयोर्नामान्तरे

११ यवमती

१२ सुन्दरी

**पञ्चमोऽध्यायः**

वर्णविषमवृत्तानि

**पदचतुरूर्ध्वप्रकरणम्**

१ पदचतुरूर्ध्वम्

२ आपीडः

३ कालिका

४ लवली

५ अमृतधारा

६ उद्गता

७ सौरभकम्

विषयाः

८ ललितम्
९ उपस्थितप्रचुपितम्
१० वर्धमानम्
११ शुद्धविराडार्षभम्
१२ गाथालक्षणम्

**षष्ठोऽध्यायः**

प्रत्ययः

विषयाः

प्रस्ताररचनाविधिः
नष्टविधिः
उद्दिष्टप्रक्रिया
एकद्व्यादिलगक्रिया
संख्याविधिः
अध्वयोगविधिः
ग्रन्थोपसंहारः

श्रीः

केदारभट्टविरचितम्

# वृत्तरत्नाकरम्

## सेतु-नारायणी-बालक्रीड़ा-सहितम्

---

## प्रथमोऽध्यायः

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥१॥

सेतुः

॥ हरिः ॥ ओम् । तत्सत् ! ब्रह्मणे नमः ॥

प्रस्फुरन्मधुपचुम्बितपद्मापङ्कजातजनिपंकजनीयम् ।
बुध्यते किल जडोऽपि च यस्मात्सारुणं तदिह धाम नमामः ॥१॥

श्रीगुरून् पितरौ चापि नत्वा भास्करशर्मणा ।
वृत्तरत्नाकरे सेतुर्यथामति विरच्यते ॥२॥

नारायणी

नत्वा गणेशं वाग्देवीं पिङ्गलं मातरं गुरुम् ।
अन्यानपि च भाष्यादिकर्तॄंश्छन्दोविशारदान् ॥

श्रीभट्टरामेश्वरसूरिसूनुर्नारायणः स्वामनुरुध्य बुद्धिम् ।
सङ्क्षेपवृत्त्या विवृतिं सुवृत्तरत्नाकरे व्यक्ततया तनोति ॥

बालक्रीड़ा

वाणी और गणेश का प्रथम करूं मैं ध्यान
ऋद्धि सिद्धि अरु बुद्धि का पाऊं ज्ञान गुमान ।
पाऊं ज्ञान गुमान करूं मैं रत्नाकर की भाषा
बालक जन इससे करें सुख से छन्द कि आशा ॥

सेतुः

ग्रन्थारम्भे यमधिकृत्य प्रवर्तते तत्प्रयोजनमिति गौतमसूत्रोक्तेः। सप्रयोजनं शिवप्रणामरूपं मंगलं निबध्नन् ग्रंथस्य संबंधप्रयोजने श्लोकत्रयेणाह—सुखसंतानेति। सुखं निर्विघ्नग्रंथसमाप्तिजन्यं चिंतामणिमंत्रजपेन विघ्नध्वंसजननात्तत्संतानः।

परम्परा तत्संबन्धः। एवं च सुखं ब्रह्मानन्दः सन्तानः पुत्रपौत्रादिः तयोः सिद्धिरिति तु व्याख्यानं प्रकृताऽनुपयोगादुपेक्ष्यम्। अत्र श्लोके यमकं शब्दालंकारः शंकरशब्दस्य द्विःश्रुतेः। यदुक्तं अर्थे सत्यर्थभिन्नानां शब्दानां सा पुनः श्रुतिर्यमकमिति ॥१॥

नारायणी

विशिष्टशिष्टाचारमूलभूत 'स्वस्ति न इन्द्रो वृद्धश्रवाः' इत्यादिवैदिकलिङ्गकल्पितश्रुतिप्रमाणकविशिष्टेष्टदेवतानमस्कारजनितनिर्विघ्नतादि स्वनाम कीर्तनपूर्वकं स्वग्रन्थस्य ग्रन्थान्तरैरगतार्थतां च सूचयन् सप्रयोजन कर्तव्यं सामान्यज्ञानपूर्वकविशेषजिज्ञासुप्रवृत्तिसिद्धयर्थं सामान्यतःप्रतिजानीते—सुखेत्यादिश्लोकत्रयेण—

ब्रह्माऽच्युताभ्यां=विधातृविष्णुभ्याम्। अर्चितं=पूजितम्। गौर्या=पार्वत्या, विनायकेन=गणाधिपेन चोपेतम्। लोकानां=चतुर्दशभुवनानां, भूरादीनां सप्तानां वा। शङ्करं=सुखकर्तारम्। एवंविधं शङ्करं महादेवम्। सुखसन्तानसिद्धयर्थं प्रणामजनिताऽविघ्नतादिसम्भूताऽव्याकुलीभावबुद्धिवैभवा-

बालक्रीड़ा

वेद के माने मंत्रब्राह्मणयोर्वेदनामधेयम् इस श्रुति के अनुसार मन्त्र और ब्राह्मण के अर्थ प्रतिपाद्य के एवं शिव सम्बन्धी शास्त्र के जानकार अथवा शिवस्येदं शैवं शिवप्रोक्तम् शिव भगवान् के कहे हुए शास्त्र के सिद्धान्त के वेत्ता अथवा शिव जिसका देवता है उस शास्त्र के विज्ञ पव्येक नामक उत्तम ब्राह्मण हुए। उसका पुत्र केदार है। जो शिव के चरणों की अर्चना में रत है। वह केदार सुखपरम्परा की सिद्धि के लिए ब्रह्मा एवं विष्णु से अर्चित तथा गौरी और विनायक के सहित

**वेदार्थशैवज्ञस्त्रज्ञः पव्येकोऽभूद् द्विजोत्तमः ।**
**तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥२॥**
**तेनेदं क्रियते छन्दो लक्ष्य लक्षण संयतम् ।**
**वृत्तरत्नाकरं नाम बालानां सुखबुद्धये ॥३॥**

सेतुः

वेदार्थेति वेदार्थाश्च शैवशास्त्राणि चेति द्वद्वः । द्विजोत्तम इति द्विजेषूत्तम इति विग्रहः ॥ तेनेदमिति । लक्ष्येति । लक्ष्यंञ्च लक्षणंचेति द्वंद्वः ताभ्यां संयुत युक्तम् । यत्तु मूले लक्ष्यलक्षणयोरभिन्नत्वादत्र द्वंदो न युक्त इति सुधायामुक्तम् तन्न; पदार्थयोरभेदेपि पदार्थताऽवच्छेदकभेदे द्वंदस्य प्रमाणप्रमेयेत्यादौ वहुशो दर्शनाद् । यद्वा लक्ष्यञ्च तल्लक्षणं चेति कर्मधारयोऽस्तु । ईदृशं वृत्तरत्नाकरं नाम छंदः छंदः प्रतिपादको ग्रंथः क्रियत इत्यर्थः ॥२।३॥

नारायणी

दिजनितसुखपरम्पराप्राप्त्यर्थम् । नत्वा, तेन केदारेणेदं छन्दः क्रियते इति तृतीयश्लोकेनाऽन्वयः । वेदानामृगादीनाम् । अर्थम्, शैवशास्त्राणि च रुद्रयामलादीनि जानातीत्येवंविधः पव्येकसंज्ञो द्विजोत्तमो ब्राह्मणोत्तमोऽभूत् । तस्य पुत्रः केदारनामा शिवचरणारविन्दपूजनतत्परोऽस्ति । लक्ष्येणोदाहरणेन मात्रावर्णाऽन्यतरनियतात्मकेन छन्दसा, लक्षणेन च तन्नियमकथनात्मकेन छन्दसा तदभिन्नेन संयुतं युक्तम् । लक्ष्यमेव लक्षणमिति विग्रहः । वृत्तरत्नानामाकरः खनिर्यत्र तत् । यद्वा तेषामाकरः समूहो यत्र ।

'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते ।'

इति विश्वप्रकाशोक्तेः । एतयैवाऽन्वर्थसंज्ञया नाम प्रसिद्धम् । छन्दः= तत्प्रतिपादकत्वाल्लक्षितं तच्छास्त्रम् । बालानां=छन्दःशास्त्राऽज्ञानाम् ।

बालक्रीड़ा

लोकमंगलकारी शंकर को प्रणाम करके लक्ष्य माने उदाहरण और लक्षण माने स्वरूप से संयुक्त वृत्तरत्नाकर नामक छन्द विषयक ग्रन्थ

# पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा।

सेतुः

अथ स्वकृतेरप्रामाण्यशंकां निरस्यति पिंगलादीनि पिंगलः सूत्रकार आदिना भाष्यकारादयः। लौकिकमिति तेन चातुर्वर्ण्यस्यात्राधिकार इति

नारायणी

सुखेनाऽल्पोपायेन सिद्धये छन्दोज्ञानार्थं क्रियते इत्यर्थः। सुखपदस्य प्रथम प्रयोगादेतच्छ्रावयितॄणां श्रोतॄणां च सुखाऽतिशयः सूचितः। यद्वा बाल प्रतिपत्तेः प्रयोजनत्वेऽपि स्वप्रयोजनत्वाऽभावादेतद्ग्रन्थजनितबालव्युत्पत्तिज-नितोपकाराऽदृष्टेन जनिष्यमाणस्वर्गादिसुखपरम्परैव स्वेष्टा स्वग्रन्थप्रयोजन-त्वेनाऽनेन निर्दिश्यते। ब्रह्मविष्णुगौरीविनायककीर्तनेन च मङ्गलाऽनन्तरं तदनु स्मृतिरूपं सूचितम्। शङ्करमित्यत्र शंशब्दस्याऽव्ययत्वाद्विभक्त्यन्त-त्वाऽभावात्। 'सुपो धातुप्रातिपदिकयोः (पा० सू० २-४--७१) इति न्न भवति। द्विजोत्तमग्रहणेन च ब्राह्मणकर्तृत्वादस्य ग्रन्थस्य श्रवणे दोषाऽ-भावः सूचितः। लक्ष्येत्यादिना लक्ष्येभ्यः काव्यादिभ्यः केवललक्षणेभ्यश्च सूत्रादिभ्यो भिन्नलक्ष्यलक्षणेभ्यश्च वृत्त्यादिभ्योऽतिशयः सूचितः॥ १-३॥

एवं सामान्यतो ग्रन्थकरणं प्रतिज्ञाय पूर्वाऽऽचार्योक्तिमूलकतया स्वकृ-

बालक्रीड़ा

को बनाता है। जिसके द्वारा बालकों को सुख से छन्दों का ज्ञान हो जावे।॥१।२।३॥

सूत्रकार आचार्य पिङ्गलने और आदि पद से ग्राह्य भाष्यकार या वृत्तिकार आचार्यहलायुध ने जो मात्रा और वर्ण के भेद से दो प्रकार के लौकिक छन्द कहे हैं उनको यहां मैं कहता हूं।

यहां एक विचार है कि वैदिक एवं लौकिक भेद से दो प्रकार के छन्द हैं। उनमें १ गायत्री २ उष्णिक् ३ अनुष्टुप् ४ बृहती ५ पंक्ति ६ त्रिष्टुप् एवं जगती ये सात छन्द वैदिक भी है और लौकिक भी हैं ऐसा

केवल नाम मात्र से या संज्ञामात्र से कह सकते हैं किन्तु इनमें अन्तरं महदन्तरम् है। क्योंकि लौकिक गायत्री आदि ७ सात छन्द क्रमशः ६,७,८, ९,१०,११,१२ ही अक्षरों के हैं न कि अधिक अक्षरों के और न अल्प अक्षरों के होते हैं किन्तु ये ही वैदिक गायत्री आदि छन्द विभिन्न अक्षरों वाला जैसे एक अक्षर का भी आठ अक्षर का भी ६ अक्षर का भी आदि २ होता है। यही हाल उष्णिक् आदि का भी है। इसका व्यौरेवार पता इस कोष्ठक से होगा।

लौकिक गायत्री आदि से वैदिक गायत्री आदि के भेद का अतिस्पष्ट रूपसे बोधक कोष्ठक

| छन्द | गायत्री | उष्णिक् | अनुष्टुप् | वृहती | पंक्ति | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

यह केवल वैदिक गायत्री आदि छन्दों के भेद को अति स्पष्टता से बतलाने वाला चक्र है। लौकिक गायत्री आदि छन्दों के भेद को बतलाने

मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥४॥

सेतुः

भावः। अत्र हलायुधवृत्तिकारः छंदस्त्रिविधं गणमात्रावर्णभेदात् तत्राद्यमार्यादि द्वितीयं वैतालीयादि तृतीयं सामान्यादीत्याह तत्र गणछंदसो मात्राछंदस्येवाऽ-

नारायणी

लिप्ताशङ्काजनितश्रोत्रनादरं निराकर्तुं प्रतिपाद्यमर्थं विशेषतः प्रतिजानीते—

पिङ्गलेन=सूत्रकर्त्रा, आदिपदाद्भाष्यकारादिभिश्च। आचार्यैरवधेय-वचनैः। यल्लौकिकं छन्दो मात्रावर्णविभेदेन=इदं मात्राच्छन्दः आर्यादि, इदं वर्णच्छन्दः सामान्यादि, इति भेदेन। द्विधा=द्विप्रकारमुक्तं तच्छ-न्दः। इह ग्रन्थे। कथ्यते इत्यर्थः। लौकिकशब्देन वेदवेदाङ्गाऽनधिका-रिणाम् त्रैवर्णिकेतराणामप्यस्मिन् ग्रन्थेऽधिकार इति दर्शयति। वर्णग्रहणेन च 'मात्राच्छन्दो गणच्छन्दः' इति कैश्चिदुक्तो द्वेधा विभागः पराकृतः। तादृशविभागे ह्येकाक्षराणां श्रयादीनामसङ्ग्रहाऽऽपत्तेः। वर्णच्छन्दस्त्वेन विभागे च गणच्छन्दसामपि सङ्ग्रहादिति भावः। अन्ये तु गणमात्राक्षर

बालक्रीड़ा

वाला चक्र अलग है जिसके स्वरूप को आगे लिखेंगे। जिनका उपयोग लोक में 'पठ्य दृश्य श्रव्य एवं चित्र्य काव्यों में होता है और लौकिक छन्दों का प्रयोग वेद में नहीं होता है शायद। किन्तु अनुभव में यही आता है कि इसको भी नहीं माना है। क्योंकि ग्रन्थकार ने सबको वृत्त शब्द से ही लिखा है ग्रन्थका नाम ही वृत्त शब्द में किया है। जातिशब्द को कहीं भी नहीं लिखा है।

प्रश्न—जब छन्दों के लक्षणविधान में गणों को ही आधार मान कर व्यवस्था की है तब वर्णमात्रादिभेदेन नहीं लिखकर गण स्वरूप भेदेन ही लिखना उचित है। क्यों कि उक्ता आदि वर्णछन्दों में मो नारी म्गौ पंक्तिः मो मो गो गो विद्युन्माला इस तरह मगणादि आठ गणों को आधार माना है और आर्यादि में गणाः पञ्चार्यादिषु संस्थिताः इस तरह पांच गणों को माना है। मगणादि आठ गणों का स्वरूप भिन्न

**षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।**
**प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ।।५।।**

सेतुः

न्तर्भावादित्याशयेनाह द्विधेति मात्राछंद आर्यादि, वर्णछंदः श्रीप्रभृतिरेतेन मात्राछंदो गणछंद इति द्विधा विभागोऽपि निराकृतः ।।४।।

शतमिति ग्रंथगणनायां प्रसिद्धानामनुष्टुप्छन्दसां श्लोकानामिति शेषः ।

नारायणी

च्छन्दस्त्वेन त्रैविध्यमाहुः । यदुक्तम्—

आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ।। इति ।

गणच्छन्द आर्यादि, मात्राच्छन्दो वैतालीयादि, अक्षरच्छन्दः समान्यादीति । तदप्यनेन पराकृतम्, गणच्छन्दसामपि मात्राच्छन्दःसु सङ्ग्रहाद् ।।४।।

अन्यकर्तृकसम्भावितच्छन्दोऽन्तरप्रक्षेपनिक्षेपनिराकरणाय ग्रन्थं परिमाणतः परिच्छिनत्ति—

पार समन्तात्साकल्येन स्फुटं प्रकटं यथा स्यात्तथा षड्भिरध्यायैर्निबद्धस्य घटितस्याऽस्य छन्दसश्छन्दोग्रन्थस्य वृत्तरत्नाकराख्यस्य षट्त्रिंशदधिकं षट्त्रिंशत्सङ्ख्याधिकं द्वात्रिंशदक्षराणामनुष्टुप्छन्दसां श्लोकानां शतं १३६ परिमाणं ज्ञेयम् । अनुष्टुप्श्लोकपरिमाणमेवात्र गृह्यते । ग्रन्थग-

बालक्रीड़ा

है और पांचगणों का स्वरूप भिन्न हैं यह बात भिन्न है । उत्तर—आप का यह सब कथन या लेखन अविचारित रमणीय है किन्तु विचार यह है कि नियत गुरु और लघुओं के पूर्वापर में विन्यस्त करने के आधार पर ही छन्दों का नामकरण किया है । उनमें आर्या आदि में गुरु एवं लघुओं को मात्रारूप में माना है और उक्ता आदि में उनको वर्ण रूपमें माना है अतः मात्रा वर्णविभेदेन लिखा है ।।४।।

इस ग्रन्थ में दूसरे किसी भी आचार्य के द्वारा उद्भावित छन्दों का प्रक्षेप नहीं किया है इस तथ्य को बतलाने के लिए ग्रन्थ के परिमाण को

म्यरस्तजभ्नगैर्लान्तै रेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥६॥

सेतुः

एतेन सम्पादिताऽन्यकर्तृक छंदोऽन्तरप्रक्षेपो निराकृतः ॥५॥

अथ द्वितीयाध्यायगतवक्ष्यमाणलक्षणोपजीव्याः सञ्ज्ञा उद्दिशति । म्यरस्तेत्यादिना मय्रस्तज्भ्न्गल् इति दर्शिता एकाक्षराः सञ्ज्ञाः धीः श्रीः स्त्रीमित्यादिसूत्राऽनुसारात् । अकारोच्चारणं तु क्वचिन्मयरसतजभनगल संमितमित्यादाविव सुखमुखोच्चारणार्थमिति भावः । आसां संज्ञानामीदृशक्रमे बीजं तु षष्ठे वक्ष्यामः । समस्तमिति संस्कृतप्राकृताद्यात्मकमित्यर्थः । त्रैलोक्य-

नारायणी

गुनाख्यां लोके तस्यैव प्रसिद्धत्वात् । एतेनाल्पतरग्रन्थपाठे प्रयासाभावाद्विस्तीर्णभाष्यवृत्त्यादिग्रन्थप्रयासनैरपेक्ष्येणैव प्रसिद्धसकलच्छन्दोज्ञानसिद्धेर्व्युत्पित्सुभिरयमेव ग्रन्थोऽभ्यसनीय इति सूचितम् ।

इदानीं सकलवाग्व्यापित्वेन मादीन्गणान्स्तुवंल्लक्षणकथनार्थमुद्दिशति- मगण-यगण-रगण-सगण-तगण-जगण-भगण-नगण-गुरुभिर्लान्तैर्लघुयुक्तैरेभिर्दशभिर्गणाष्टकगुरुलघुरूपैरक्षरैः समस्त वाङ्मय वाग्जालं व्याप्तम् । अस्तीति शेषः । अत्रोपमा विष्णुना त्रैलोक्यं यथा व्याप्तं तद्वत् । अत्र स्वरोच्चारणं सौकर्यार्थम् । एवमुत्तरत्रापि ।

वक्ष्यमाणत्र्यक्षरप्रस्तारक्रमोपपन्नक्रमनिर्देशकसूत्रानुरोधेनाऽयं गण उक्तः, सूत्राणि तु 'धी श्री स्त्री म्' ( पि. सू. २–१ ) 'वरा सा य्', ( पि. सू. २–२ ) 'का गुहा र्', ( पिं. सू. २–३ ) 'वसुधा स्'' ( पिं. सू. २–४ ) 'सा ते क्व त्', ( पिं. सू. २–५ ) 'कदा स

बालक्रीड़ा

लिखते हैं कि इस वृत्तरत्नाकर नामक छन्दोंग्रन्थ की ६ अध्यायों में रचना की हैं अतः इसमें ६ अध्याय हैं । इसका प्रमाण भी अत्यन्त स्पष्ट है कि इसमें १३६ श्लोक हैं ॥५॥

अब छन्दों के लक्षण कहने के लिए मादि गणों का उपदेश करते हैं

**सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।**
**मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥७॥**

सेतुः

मिति सर्वं विष्णुमयं जगदित्युक्तम् ॥६॥

अथैतासां संज्ञानामभिधेयमाह सर्वत्र गवो गुरवो यस्मिन्स मो मसंज्ञः। मुखं आदौ लो लघुर्यस्मिन्नऽन्ते च द्वौ गुरू यस्य स यः। मध्यो लघुराद्यन्तौ गुरू यस्य स रः। अन्त्यो गुरुराद्यौ च लघू यस्य स सः। अन्त्यो लघुराद्यौ

नारायणी

ज्', (पिं. सू. २-६) 'किं वद म्', (पिं. सू. सु. २-७) 'न हस न्' (पिं. सू. २-८) 'गृ ल्' (पिं. सू. २-९) 'गन्ते' (पिं. सू. २-१०) इति ॥ ६ ॥

क्रमेण गणांल्लक्षयति—

अत्र च्छन्दःशास्त्रेऽष्टौ त्रिकास्त्र्यक्षरा गणा भवन्ति। चतुरक्षरा गणा मा भूवन्निति त्रिका इत्युक्तम्। परिमाणे कन्। तानाह—सर्वेति। सर्वे गवो गुरवो यस्मिन्नसौ सर्वगुः। 'नामैकदेशे नामग्रहणम्' इति न्यायेन गुशब्दो गुरुवाची। एवं लशब्दो लघुवाची। एवं सर्वत्र। मो=मगणः। मुखे आदावन्तर्मध्ये लो लघुर्ययोस्तौ य-रौ=यगण-रगणौ। अन्ते गलौ गुरुलघू ययोस्तौ क्रमेण स-तौ सगण-तगणौ। गु=गुरुर्मध्य आद्यश्च ययोस्तौ ज्-भौ जगण-भगणौ। त्रिलस्त्रिलघुर्नो नगणः। एतेषां प्रस्तारो यथा—

बालक्रीड़ा

कि म य र स त ज भ न तथा ग् एवं ल इन दश अक्षरों से यह समस्त वाङ्मय अर्थात् दृश्य श्रव्य पठ्य एवं चित्र्य काव्य ऐसे व्याप्त है जैसे विष्णु से तीनों लोक व्याप्त हैं ॥६॥

सर्वगुरु मगण १ आदि लघु यगण २ मध्य लघु रगण ३ अन्त लघु तगण आदि गुरु भगण ५ मध्य गुरु जगण ६ अन्त गुरु सगण ७ सर्वलघु नगण ८ इस तरह ये आठ गण वर्णछन्दों में होते हैं। नामैकदेशे नाम

सेतुः

गुरू यस्य स तः । मध्यो गुरुराद्यौ तौ लघू यस्य स जः । आद्यो गुरुरन्त्यौ लघू यस्य स भः । त्रिलघुर्नः इत्यष्टौ त्रिकास्त्रयो वर्णाः परिमाणमेषां ते त्रिका स्त्रिवर्णात्मका इतियावत् गणा भवंति । म SSS य ।SS र S।S स ।।S त SS। ज ।S। भ S।। न ।।। यद्यपि सूत्रकृतार्यादिषु वक्ष्यमाणानां चतुर्मात्राणामेव लः समुद्रा गणा इति तृतीयाध्यायगतसूत्रेण गणसंज्ञा

नारायणी

| मः | यः | रः | सः | तः | जः | भः | नः |
|---|---|---|---|---|---|---|---|
| SSS, | ।SS, | S।S, | ।।S, | SS।, | ।S।, | S।।, | ।।।, |

एतेषां क्रमनियमश्च प्रस्तारे प्रकटीभविष्यति । अन्यत्रापि मादीनां स्वरूपमुक्तम्—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ इति ॥

मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः
तो व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यगो,
भश्चन्द्रो यश उज्ज्वल मुखगुरुर्नो नाक आयुस्त्रिलः ॥ इति ॥

इदं च फलं काव्यनायकस्य तत्कर्तुः पठितुर्वा यथायोग्यं व्यस्तं समुच्चितं वा ज्ञेयम् । यत्र नायकादिभिः प्राचीना देवतादिः स्वकल्पिता

बालक्रीड़ा

ग्रहणम् के अनुसार यहां ग् से गुरु और ल् से लघु का ग्रहण होता है । यहां आठ गणों का निर्देश किया है किन्तु यह नहीं कहा कि ये वर्णों के उपयोगी गण हैं मात्राओं के उपयोगी हैं इसको स्पष्ट करने के लिए कहते हैं त्रिकाः । यहां परिमाण अर्थ में कन् प्रत्यय है । जिस का अर्थ है यहां जो गण कहा गया है उसका मापदण्ड तीन ही हैं न तो ३ से कम है और ३ से अधिक है । यदि इन गणों का परिमाण मात्रा को माने तो मगण में ६ मात्राएं होती हैं क्यों कि गुरु द्विमात्रिक होता है । मगण में तीनों

सेतुः

कृता धीः श्रीः स्त्रीमित्यादि सूत्रगतं मकारं च संज्ञात्वेनेत्यादि वृत्तिग्रंथस्याप्येवमेव स्वारस्यं तथापि मादीनांवर्णसमुदायरूपत्वाद् गणत्वेन व्यवहारःअतएवात्रायुङ् नजिति सूत्रेण जगणो न कर्तव्य इति वृत्तिकारः। अत्रेदमवधेयम् दुष्टा रसतजा यस्माद्धनादीनां विनाशकाः। काव्यस्यादौ न दातव्या इति छदो

नारायणी

वा तत्र कर्तुः श्रोतॄणां चेत्यादि। क्वचित्तु देवतामात्रमवादि—

पृथ्वीजलशिखिवाता गगनं सूर्यश्च चन्द्रमा नाकः।
प्रस्तारक्रमवशतो देवा ज्ञेया यथासङ्ख्यम् ॥ इति ॥

गणदेवतादिकोष्ठकम्।

अथ यदि दैवाद् दुष्टफलो गणः काव्यादौ कृतः, तदा तद्रक्षणार्थं द्वितीयो गणः शोध्यः। तत्र मगण-नगणौ मित्रसंज्ञौ, भगण-यगणौ भृत्यौ, ज-तावुदासीनौ, र-सावरी नीचौ च। तदुक्तम्—

म-नौ मित्रे भ-यौ भृत्यावुदासीनौ ज-तौ स्मृतौ।
र-सावरी नीचसंज्ञौ द्वौ द्वावेतौ मनीषिभिः ॥ इति ॥

तथा च यदि मित्रगणान्मित्रगणस्तदा समृद्ध्यादि फलम्, मित्रगणाद् भृत्यगणे जयादिशुभम्, मित्रादुदासीने शून्यकम्, मित्राच्छत्रौ बन्धुपीडा, भृत्यान्मित्रे तु सर्वकार्यसिद्धिः, भृत्याद् भृत्ये सर्वो लाभः, भृत्यादुदासीने

बालक्रीड़ा

गुरु है। लघु की एक मात्रा होती है इससे तीन लघुवाले नगण की तीन मात्राएं होती हैं। मगण जगण एवं सगण में चार चार मात्राएं और यगण रगण में पांच २ मात्राएं हैं। अतः त्रिकाः की संगति नहीं होती है यदि तीन से तीन वर्णों को ग्रहण करते हैं तब संगति बैठ जाती है

| मगण | यगण | रगण | तगण | भगण | जगण | सगण | नगण |
|---|---|---|---|---|---|---|---|
| SSS | ISS | SIS | SSI | SII | ISI | IIS | III |

सेतुः

विदो जगुः । यदा दैववशादाद्यो गणो दुष्टफलो भवेतों तदा तद्दोषशांत्यर्थम् शोध्यः स्यादपरो गणः । तद्यथा ।

नारायणी

धननाशः, भृत्याद्वैरिणि शोकः, उदासीनान्मित्रे किंचिदेव कार्यसिद्धिः, उदासीनाद् भृत्ये सर्वे वशाः, उदासीनादुदासीने न शुभं न चाशुभम्, उदासीनाच्शत्रौ स्वजनवैरम्, शत्रोर्मित्रे शून्यम्, शत्रोर्भृत्ये गृहिणीनाशः शत्रोरुदासीने स्वकुलक्षयः, शत्रोः शत्रौ काव्यनायकनाशो भवति । इति गणयुगफलम् । तदुक्तम्—

मित्रान्मित्रादयः स्युर्यदि धनमुदयं शून्यकं बन्धुपीडां
भृत्यान्मित्रादयश्चेद् धृतिमधिकगुणं हानिशोकौ च कुर्युः ॥
औदास्यार्थाच्च मित्रादय इह कुसुखं धैर्यमीर्ष्यां स्ववैरं
शत्रोर्मित्रादयश्चेद् भ्रममथ गृहिणीनाशमाधिं विनाशम् ॥इति॥

तथा—

मित्रान्मित्रं विधत्ते प्रचुरधनमथो मित्रतो भृत्यसंज्ञः

बालक्रीड़ा

अतः त्रिकाः माने तीन वर्ण जिनके परिमाण हैं ऐसे मगणादि आठ गण गृहीत होते हैं । इन का प्रस्तार के अनुसार स्वरूप है ।

| गणनाम | मगण | यगण | रगण | तगण | भगण | जगण | सगण | नगण |
|---|---|---|---|---|---|---|---|---|
| स्वरूप | SSS | ISI | SIS | SSI | SII | ISI | IIS | III |
| देवता | भूमि | जल | अग्नि | आकाश | चन्द्र | सूर्य | वायु | स्वर्ग |
| फल | श्री | वृद्धि | विनाश | धननाश | यश | रोग | भ्रमण | आयु |
| भिन्नादि | मित्र | भृत्य | शत्रु | उदासीन | भृत्य | उदासीन | शत्रु | मित्र |

सेतुः

मनौ मित्रे भयौ भृत्यावुदासीनौ जतौ स्मृतौ रसावरी नीचसंज्ञौ द्वौ द्वौवेतौ मनीषिभिः । मित्रोदासीनभृत्येभ्यो मित्रभृत्यौ शुभौ मतौ । अन्येभ्य इतरे नेष्टा इत्यूह्य परिशेषतः । २क्ष्माम्ब्वऽग्न्यऽनिलखाऽर्केन्दुनाका मादेः सुराः क्रमात् श्रीवृद्धिनाशपथ्यस्त्रीरुक्कीर्त्यायुः फलानि च । ३ गणप्रसंगाद्वर्णानामपि शुद्धिः प्रकाश्यते ञङगजाष्टठढणः स्यफवा भमरा लवौ षडलासंयुताश्चान्ये काव्यादौ न शुभा मताः ४ अतएवोक्तम् अक्षरे परिशुद्धे तु नायको भूतिमृच्छतीति ।

नारायणी

स्थैर्यं मित्रादुदासो न किमपि च फलं मित्रतः शत्रुसंज्ञः ।
बन्धोः पीडामथो स्माद्यदि खलु नियतं भृत्यतो मित्रसंज्ञः
सर्वं कार्यं च भृत्याद् भृतगण इह चेदायतिः सर्वलोके ॥
भृत्याच्चेत्स्यादुदासो धनविगममथो भृत्यतः शत्रुसंज्ञः
शोकं कुर्यादुदासाद्यदि भवति तदा मित्रसंज्ञोऽल्पकार्यम् ।
तस्माद् भृत्यः प्रभुत्वं सत इह सततं स्यादुदासो विनाशं
तस्माच्छत्रुः स्ववैरं विविधगुणहरं सर्वसत्कार्यनाशम् ॥
शत्रोर्मित्रं च शून्यं यदि भवति ततो भृत्यसंज्ञो गृहिण्या
नाशं तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम् ।
शत्रोः शत्रुर्भवेच्चेद् द्विगणसुसहितो नायकस्यैव नाशं
देशोद्वासं विधत्ते कथयति च फलं पिङ्गलो नागराजः ॥इति॥

अत एव किरात-माघ-नैषधीयेषु दुष्टफलादप्युदासीनाज्जगणादुदासीनस्य तगणस्य सत्त्वान्न शुभं न चाशुभमिति दोषाभावः ।

अथ गणशुद्धिप्रसङ्गा दक्षरशुद्धिरुच्यते । तच्छुद्धौ हि नायकादीनां सुखं भवति । तदुक्तम्—

अक्षरे परिशुद्धे तु नायको भूतिमृच्छति । इति ।

अत्र ङ-ञ-ज-ट-ड-ढ-ण-प-फ-ब-भ-म-र-ल-घ-ष-ह-लान्संयुक्ताक्षराणि च विहाय शेषाक्षराणि शुभफलानीति संक्षेपः । तदुक्तं भामहेन—

## ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्फलाः ।

सेतुः

सर्वस्यैतस्यापवादो भामहेनोक्तः देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा इति ॥७॥

अथ द्वितीयाऽऽध्यायगताऽऽर्यादिलक्षणोपजीव्यानां पंचगणानां स्वरूपमाह ज्ञेया इति । सर्वश्च अंतश्च मध्यश्च आदिश्च सर्वान्तमध्यादयः ते गुरवो

नारायणी

अवर्णात्सम्पत्तिर्भवति मुदिवर्णाद्धनशता-
न्युवर्णादख्यातिः सरमसमृवर्णाद्धरहितात् ।
तथा ह्येचः सौख्यं ङ-ञ-ण रहितादक्षरगणात्
पदादौ विन्यासाद् भ-र-ब-ह-ल-हाहाविरहितात् ॥

तथा—

कः खो गो घश्च लक्ष्मीं वितरति, वियशो ङस्तथा चः सुखं छः
प्रीतिं, जो मित्रलाभं, भयमरणकरौ झ ञौ, ट-ठौ खेददुःखे ।
डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तः सुखं थश्च युद्धं
दो धः सौख्यं, मुदं नः, सुखभयमरणक्लेशदुःखं पवर्गः ॥
यो लक्ष्मीं, रश्च दाहं, व्यसनमथ ल-वौ, शः, सुखं षश्च खेदं,
सः सौख्यं हश्च खेदं, विलयमपि च लः, क्षः समृद्धिं करोति ।
संयुक्तं चेह न स्यात्सुखमरणपटुर्वर्णविन्यासयोगः
पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम् ॥ इति ॥

तथा दुःखदारिद्र्यवाचका दुष्टा शब्दाः काव्यादौ न प्रयोज्याः । अयं च प्रयोगनिषेधः काव्यादौ मुक्तकश्लोके चादौ ज्ञेयः । देवतादिवाचके

बालक्रीड़ा

गणों के स्वरूप देवता फल एवं मित्रादि का बोधक कोष्ठक

इस प्रकार वार्णिक छन्दों के उपयोगी गणों को कहकर मात्रिक छन्दों के उपयोगी गणों को कहते हैं ।

गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥८॥

सेतुः

येष ते तथोक्ताः द्वन्द्वान्ते श्रूयमाणत्वाद् गुरुपदस्य प्रत्येकमन्वयः । तेन सर्वगुरुरन्तगुरुर्मध्यगुरुरादिगुरुश्चेति चत्वारो गणाः । ननु तर्हि मसजभरूपा एवैत इति पुनः कथनं वृथैवेतेषामतआह चतुष्कलाः इति । चतुर्मात्रा एतेन त्र्यक्षरात्मका मसजभाः । तेन सर्वगुरुर्द्विगुरुरित्यर्थः । एकस्य गुरोर्द्विमात्रत्वात् एवमन्तगुरावादौलघू मध्यगुरावाद्यन्तयोर्लघू आदिगुरौ मध्यान्तावेव लघू ज्ञेयौ अन्यथा चतुर्मात्रता न स्यादेवं चतुरो गणानुक्त्वा पञ्चमगणमाह चतुर्लघ्विति चत्वारो लघवो यस्मिन्स चतुर्लघुः पञ्चमो गणस्तेन सहिताः पंच गणाः । यथा द्विगुरू ॥ऽ अन्त्यः ऽऽ मध्यः ।ऽ। आदिगुरुः ऽ॥ चतुर्लघु रिति ॥। एषामुपआर्यादिलक्षणे द्वितीयाध्याये भविष्यति । यत्तु सुधादौ व्याख्यातं सर्वत्रांते

नारायणी

शब्दे तु गणविचारेऽक्षरविचारे वा दोषाऽभावः ।

तदुक्तं भामहेनैव—

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥ इति ॥

तया च माघ-किरातयोर्जगणसंयोगयोः प्रयोगेऽपि श्रीशब्दप्रयोगाद्दोषाभाव इत्यलं भूयसा प्रसक्तेन । प्रकृतमनुसरामः ॥७॥

इदानीं मात्राच्छन्दःसूपयोगिनो गणानाह—

अत्र शास्त्रे आर्यादिषु च्छन्दःसु स्थिताश्चतुष्कलाश्चतुर्मात्राः पञ्च गणा ज्ञेयाः । प्राकट्याय स्वरूपतस्तानाह—सर्वेति । सर्वत्रान्ते मध्ये आदौ च गुरुर्येषां ते तथा । कथम्भूताः चतुर्लघुना गणेनोपेता युक्ताः । तत्र चतुर्मात्रिकत्वात्सर्वगुरुर्लभ्यते । यथा—

बालक्रीड़ा

यहाँ छन्दः शास्त्र में आर्यादिछन्दों के उपयोगी ५ गण हैं । जिनमें प्रत्येक गण की चार २ मात्राएं होती हैं । यह नियत है ऐसा जानना चाहिए ।

**सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।**
**वा पदान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मातृको लृजुः ॥९॥**

सेतुः

मध्य आदौ च गुरुर्येषां ते इति तच्चिन्त्यम् । शेषो बहुव्रीहिरिति पाणिनि सूत्रस्येन शेषपदेन त्रिकस्तर्हि शेषग्रहणमित्यादि महाभाष्यवार्त्तिकादि ग्रंथेन च सह विरोधात् । अतएव चित्रगुरित्यत्र चित्राणां गवा मयमिति मीमांसकोक्तविग्रहो मिथ्यात्वाद्धेयः । अत्र सर्वश्च ते आदि श्चेत्यादि ग्रन्थेन कर्मधारयं कुर्वतः सुल्लणस्य तु महान् प्रमादः । सर्वगुरु गणस्याऽनुपपत्तेः । किंचाद्यन्तपदयोर्व्यत्ययोऽशुद्धा मात्रा प्रस्तारक्रम विरोधादिति षष्ठे स्फुटीकरिष्यते ॥८॥

नारायणी

अयं गणक्रम आर्यानिष्टोद्दिष्टयोरुपयोगीति तत्रैव वक्ष्यते पञ्चक-लादयस्तु प्राकृतप्रक्रमे वक्ष्यन्तेऽनुपयोगात् ॥८॥

**असौ वर्णो ग् गुरुर्ज्ञेयः** कोऽसावित्यपेक्षायामाह—**सानुस्वार** इति । **अनुस्वारेण युक्तः अं-कं-इत्यादिः, विसर्गान्तः अः-कः-इत्यादिः, दीर्घः आ. का. इत्यादिः । इदं प्लुतस्याप्युपलक्षणम् । युक्तपरो युक्तः संयुक्तः परो यस्य सः । संयोगे परभूते यः पूर्वः सोऽपि गुरुरित्यर्थः । यथा**

**बालक्रीड़ा**

इनका प्रस्तार के अनुसार स्वरूप यह है ॥८॥

| सर्वगुरु | आदिगुरु | मध्यगुरु | अन्त्यगुरु | चतुर्लघु |
|---|---|---|---|---|
| SS | SII | ISI | IIS | IIII |

इस प्रकार वार्णिक एवं मात्रिक छन्दों के उपयोगी गणों को बतलाकर गुरु को बतलाते हैं । सानुस्यार अनुस्वार से युक्त वर्ण अं कं इत्यादि गुरु है जिसके अन्त में विसर्ग हो विसर्जनीय हो वह गुरु हैं जैसे अः कः में अ क इत्यादि गुरु हैं दीर्घ वर्ण आ, का इत्यादि गुरु है प्लुत को भी इसी से

सेतुः

अथ गुरुलघु स्वरूपमाह। सानुस्वार इति। यथा तरुणं सर्षपेत्यादाव-नुस्वारोऽन्तो गो गुरुः। श्रियः पतिरित्यादौ विसर्गान्तो गो, युक्तपरः संयोगपरो यथा तरुणं सषपेत्यत्र सकारादऽकारः चकारादव्यंजनांतोऽपि यथा नतभ्रु वां-मन्मथविभ्रमोऽभवदिति। यत्तु भट्टाः युक्तपर इति व्यंजनोपध्मानीयजिह्वामूली-

नारायणी

विष्णुरित्यादौ विशददादिः। पादान्ते श्लोकचरणान्ते वर्तमानो लघुर्गुर्वा भवति। लघुत्वेऽपेक्षिते लघुकार्यं, गुरावपेक्षिते गुरुकार्यं करोतीत्यर्थः। अय च व्यवस्थितविकल्पः। तेन 'अथ वासवस्य वचनेन' ( कि० १२-१ ) इत्यादावुद्गतादिपादान्तस्य लघुतैव। 'तस्याः खुरन्यासपवित्रपांसुम्' ( रघु० २-२) इत्यादौ च गुरुतैव। युक्तपरश्चेति व्यञ्जनोपध्मानीयजि-ह्वामूलीयपराणामुपलक्षणम्। तथा च---तनुवाग्विभवोऽपि सन्' (रघु १-६ 'मन्दः कवियशःप्रार्थी, ( रघु. १-३ ) इत्येवमादिषु सकारस्य, जिह्वामू-

बालक्रीड़ा

गुरु समझना चाहिए। युक्त माने संयुक्त है परे आगे जिसके ऐसा वर्ण अर्थात् संयुक्त वर्णं का आदि वर्ण गुरु है जैसे लक्ष्मीः यहां क्ष का और म का संयोग है उसके पूर्व का वर्ण ल गुरु है। पाद के अन्त में पद्य के चरण के अन्त में वर्त्तमान वर्ण गुरु भी हो सकता है और लघु भी माना जा सकता है। जब गुरुता की अपेक्षा हो तब गुरु मानना चाहिए और जब लघुता की जरूरत हो तब लघु मानना चाहिए। व्यवस्थित विकल्प है। व्यवस्था के अनुसार यह गुरु मानने एवं लघु मानने में विकल्प है। जिसके फल स्वरूप "अथ वासवस्य वचनेन, इसमें उद्गता छन्द के नियम के अनुसार पाद के अन्तर्गतवर्ण को नकार गत अकार को लघु ही माना जाता है।

विसर्ग के साहचर्य से अर्ध विसर्ग सदृश जिह्वामूलीय एवं उपध्मानीय भी जिसके अन्त में हो उसे गुरु मानना चाहिए।

सेतुः

यपराणामुपलक्षणमिति व्याचख्युस्तत्र व्यंजनांशे उपलक्षणत्वमास्तां जिह्वामूलीयाद्यंशे तु संयोगपरतैवास्तीति कथमिति चिंत्यम्। अयोगवाहाना माश्रयस्थानभागित्वाज्जिह्वामूलीयोपध्मानीययोः कपर्गपवर्गयोरानन्तर्येण संयुक्तत्वात्। यथोक्तं हयवरटिति सूत्रे महाभाष्ये उश्वजकः हलोऽनंतराः संयोग इति संयोगसंज्ञेति। पृथगनुस्वारग्रहणं तु गोवलीवर्दन्यायेन, एवं विसर्गस्यापीत्यवध्येयम्। एवं ह्रस्वस्य गुरुत्वमुक्तं दीर्घश्च गुरुः। तरुणं सर्षपशाकमित्यत्रैव

नारायणी

ीयोपध्मानीयपक्षे च दकार-शकारयोर्गुरुत्वं सिद्धं भवति। इतरथा कारस्य पादान्तत्वात् सकारस्य न प्राप्नोति, जिह्वामूलीयोपध्मानीययोश्च योगपरत्वाभावाद्दकारशकारयोर्न प्राप्नोति। तदुक्तम्—

दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम्।
सानुस्वारं च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम्॥ (पि०सू०१-४)

ति व्यञ्जनपरस्य गुरुत्वाल्लघ्वन्तपादेषु सामान्यादिषु व्यञ्जनान्तः पादो न कार्यः। ननु, "संयोगे गुरु" (पा.सू १-४-११) "दीर्घं च" (पा.सू.-४-१२) इति वदता पाणिन्याचार्येण पादान्तस्थादीनां गुरुसंज्ञाया अयुक्तत्वात्तद्विरोध इति चेत्, मैवम्। 'कुण्डा' हुण्डा' इत्यादिषु "गुरोश्च हलः (पा.सू. ३-३-१०३) इत्यकारप्रत्ययस्य, 'ईहाञ्चक्रे' 'ऊहाञ्चक्रे', इत्यादिषु च "इजादेश्च गुरुमतोऽनृच्छः (पा.सू. ३-१-३६) इत्याम्प्रत्ययस्य सिद्ध्यर्थं स्वशास्त्रे संयोगपरदीर्घयोर्गुरुत्वं पाणिनिः प्रत्यज्ञासीत्।

बालक्रीड़ा

जैसे—मन्दः कवियशः प्रार्थी-इसमें क के पूर्व के विसर्ग जिह्वामूलीय कहलाते हैं और प्र के पूर्व के विसर्ग उपध्मानीय कहलाते हैं अतः ये जिनके अन्त में हैं वे (दकार का अकार और शकार का अकार) दोनों गुरु माने जाते हैं। तस्याः खुरन्यासपवित्रपांसु में 'मोनुस्वारः' से पदान्त के मकार को अनुस्वार हो जाता है अतः यह अनुस्वारः का उदाहरण होने से गुरु है।

सेतुः

ऋकारात्पर आकारः। वा पादान्त इति पादश्चेह समो ग्राह्यस्तदन्यलघोर्गुरुत्वं वैकल्पिकं तेन गुरुत्वाज्जतौ तु वंशस्थमुदीरितं जराविति वंशस्थलक्षणे जगन्निवासो वसुदेवसद्मनीत्यत्र संगतं भवति। अन्यथा सद्मनि इत्यत्र इकारस्य लघुत्वेन रगणान्तत्वं न स्यात्। क्वचित्तु लघुतैव तेन जौ समानिका गलौ चेत्यादौ समानिकादिलक्षणसमन्वयः। विषमपादान्त्यलघोस्त्वनुस्वारादिपरत्वं विना न गुरुत्वम्। अत एव सप्तमे काव्यप्रकाशकृतोक्तम् विकसितसहकारतारहारिपरिमलपुंजित गुंजितद्विरेफ इत्यत्र परिमलपदं त्यक्त्वा पूर्ववर्णस्य

नारायणी

अन्यैस्तु स्वशास्त्रे प्रयोजनाभावान्नाम्नातं नत्वभावादिति न किंचिदेतत्। वृत्तिकारस्तु 'ग्न्ते' (पि.सू. २-१०) इतिसूत्रे वाशब्दाऽश्रवणात्सर्वत्र पादान्तस्थो लो गुर्भवतीति व्याचख्यौ तदयुक्तम्। गुरुलघुभिरेव च समाप्तयोः समानीगीत्यार्ययोर्व्यभिचारात्। अथ तत्र लघुसमाप्तिविधायकशास्त्रेण विशेषशास्त्रेण सामान्यस्याऽस्य बाध इति मतम्, तदपि न, सिद्धेन हि लघुना समाप्तिर्विधीयते न तु समाप्तिस्थस्य लघुत्वं; येन बाधः स्यात्। "ग्न्ते" (पि.सू. २-१०) इति सूत्रं त्वन्ते पदान्ते स्थितो लघुः क्वचिद् गुरुरिति क्वाचित्कत्वाभिप्रायं व्याख्येयम्। तेन न तद्विरोध इत्यलं प्रपञ्चेन। प्रकृतमनुसरामः।

बालक्रीड़ा

तनुवाग्विभवोऽपि सन् इसमें अन् यह किसका उदाहरण है। क्यों कि नकार को अनुस्वार होता नही है। नश्चापदान्तस्य यह सूत्र अपदान्त नकार को अनुस्वार करता है किन्तु यह नकार पदान्तस्थ है। अतः सानुस्वारः का उदाहरण नही हो सकता है। युक्तपरश्चयः इस का भी उदाहरण नही हो सकता है क्यों कि संयोग हलों का ही होता है अन् में अकार अच् है। अच् एवं हल् का संयोग होता नही है। ऐसी स्थिति में अन् यह किसका उदाहरण हो सकता है। इस आशंका का उत्तर है कि

**पादादाविह वर्णस्य संयोगः क्रमसञ्ज्ञकः।**

सेतुः

गुरुत्वार्थं प्रमुदित इति पाठो युक्त इति। कवयस्तु विषमपादान्त्यस्यापि गुरोः स्थाने लघु प्रयुञ्जते यथा दिवाकराद्रक्षति यो गुहासु इत्यादि। अथ गुरोः प्रस्तारलेखनसम्प्रदायमाह वक्र इति ययान्यो गुरुरन्यो मात्रिको लघुर्ज्ञेयः स तु ऋजुर्लेख्यो यथा।।९।।

अथ गुरोरपि क्वचिल्लघुतामाह पादादाविति—पादादौ यः संयोगः।

नारायणी

स च प्रस्तारे वक्रः नागराक्षरेऽकारश्लेष(ऽ)चिह्नवज्ज्ञेयो लेख्यः। पूर्वोक्तेभ्यः सानुस्वारादिभ्योऽन्यः ल् लघुः कोऽसावन्यः मात्रिको मात्रारूपः। एतेन गुरोर्द्विमात्रत्वमुक्तं भवति। स प्रस्तारे कर्तव्ये ऋजुरेखाकारः (।) कार्यः।।९।।

संयोगपरस्य गुरुत्वे क्वचिदपवादमाह—

इह च्छन्दःशास्त्रे पादादौ चरणादौ वर्णस्य वर्णान्तरेण संयोगः क्रम-

बालक्रीड़ा

आचार्य ने यहां युक्तपरश्च लिखा है संयुक्तपर नहीं लिखा है। अतः योग माने सम्बन्ध जिन का होगा वे भी युक्त कहलाते हैं। सम्बन्ध अनन्त हैं। प्रकृत में अकार और नकार का पूर्वापरीभाव से विन्यास ही सम्बन्ध है। अतः युक्त माने सम्बन्धी अन् के परे रहते पूर्व स को गुरु माना जा सकता है। वह गुरु आकार में वक्र है अतः उस को (ऽ) ऐसा वक्र लिखना चाहिए। इन पहले बतलाये हुए गुरुओं से अन्य भिन्न वर्ण ल लघु है। जो एक मात्रा वाला है। और ऋजु है सरल है अतः उसको (।) ऐसा लिखना चाहिए।।९।।

पद्य का चतुर्थ अंश पाद कहलाता है उसका आदि पादादि कहलाता है। इस छन्दः शास्त्र में पाद के आदि में आरम्भ में स्थित वर्ण का वर्णा

**पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद् गुरोः ॥१०॥**

**तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।**

सेतुः

स क्रमसंज्ञकः तस्मिन्परतः पूर्वस्य गुरोरपि वर्णस्य लघुता स्यात् ॥१०॥

तरुणमिति अत्राल्पव्ययेन सुन्दरि इति तृतीयपादान्त्य इकारो ग्राम्येति संयोगपरत्वाद् गुरुरित्यार्यायास्तृतीयपादस्य द्वादशमात्रता न ...

नारायणी

संज्ञकः पूर्वाचार्यैरुक्त इति शेषः। तेन पादादिसंयोगेन पुरःस्थितेन क्वचिदपेक्षितविषये संयोगपरत्वाद् गुरोरपि लघुता स्यात्। 'वा पादान्ते' (वृ.र. १-९) इत्यत्र पादान्ते लघोर्गुरुत्वं विकल्पितम्। इह तु गुरोर्लघुत्वमिति न पौनरुक्त्यमिति भावो वक्ष्यते ॥१०॥

गुरोर्लघुतायामुदाहरणं सप्रतिज्ञमाह इदमस्योदाहरणम्—

अस्य पूर्वश्लोकार्थस्य। अत्र ग्राम्यनागरिकवरागमे ग्राम्यवरे साभिलाषां चतुरवधूं निन्दागर्भस्तुत्या निवारयन्ती सख्याह— हे सुन्दरि! ग्राम्यजनो ग्रामीणो जनोऽल्पव्ययेन मिष्टं रसवदशनमश्नाति भुङ्क्ते ... तत्र तरुणं कोमलं सर्षपाणां शाकम्, नवानां तण्डुलानामोदनं वाऽपर्युषितौदनं वा, पिच्छिलानि वृद्धानि दधीनीति अल्पद्रव्यो मिष्टान्न-

बालक्रीड़ा

न्तर के साथ जो संयोग हैं उसकी क्रम संज्ञा है। यदि वह क्रम संज्ञक वर्ण सामने रहेगा तब भी अर्थात् संयुक्त वर्ण के पूर्व में रहने के कारण गुरु हुआ भी लघु ही माना जायगा ॥१०॥

क्रमसंज्ञक वर्ण की स्थिति में रहने से गुरु होने पर भी जहाँ वर्ण लघु माना गया है उसका उदाहरण लिखते हैं। ताजी सरसों का साग, नये चावल का भात, पिच्छिल गलकेदार दधि आदि अल्पव्यय से प्राप्य

सेतुः

इत्यत्र तस्य लघुत्वमुच्यते । यदुक्तं श्रुतबोधे "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या इति । वस्तुतस्तु सूत्रादिग्रंथ पर्यालोचने आर्यायाः पादव्यवस्था न लभ्यते । अत एव पादादाविह वर्णस्येति पाठः क्वचित्पुस्तकेषूपलभ्यते युक्तश्चायं कुत्थ विशं-मुत्थपए वर्णलहू हो इति प्राकृते पैङ्गले सामान्यतः कुत्रापीत्यभिधानात् ।

नारायणी

भोजी ग्राम्यजनोऽचतुरोऽयम् । त्वं च सुन्दरी अतोऽमुं परित्यज्य नागरिके साभिलाषा भवेत्यत्र ध्वन्यम् । अत्र सुन्दरीत्यत्र संयोगपरत्वाद् गुरुत्वे सति तृतीये पादे त्रयोदशमात्रता मा भूदिति लघुत्वं प्रतिज्ञायते । तथा च द्वादशमात्रतैवेति भावः । क्वचिदिति व्यवस्थितविकल्पार्थम् । तेन सुन्दरीत्यत्र लघुतैव ।

गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ ( वास )
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।

इत्यादौ गुरुतैव । आर्यानुदाहरन्त आर्यासु पादव्यवस्थाभावं वदन्तो वृत्तिकृतः पराकृताः । अत एव—

त्रिभिस्त्रिभिर्गणैः पादावार्यादेर्विषमौ स्मृतौ । तति ।

"यस्याः पादे प्रथमे" ( श्रु० ४ ) इत्यादि चाभियुक्तैरुक्तं पथ्याभिप्रायं वा, तत्र पादव्यवस्थाया वक्ष्यमाणत्वात् ।

बालक्रीडा

मिष्ट को हे सुन्दरि ! ये ग्रामीणजन खाते हैं । यहां कोई कामुक किसी सुन्दरी को कहता है कि ग्रामीण जन को छोड़ कर मेरे जैसे नागरिक की अभिलाषा करो, यह ध्वनित होता है । यह तो साहित्यिक चर्चा है । प्रकृत प्रसङ्ग यह है कि पहले संयुक्त अक्षर के आगे रहने पर संयोग के आदि अक्षर को गुरु मानने का निर्णय जो किया था उसका अपवाद यह है ।

सेतुः

प्राप्तनाभिह्नद मज्जनमाशु प्रस्थितं निवसनग्रहणायेति माद्ये नाभि इत्यत्रत्येकारस्य ह्रेति संयोगपरस्यापि लघुताया औचित्याच्च।

नारायणी

ननु 'वा पादान्ते' (वृ० र० १-६) इत्यत्र वर्णमात्रस्य वा पादान्तस्थस्य गुरुता विकल्प्यते, गुरोरेव वा नित्यप्राप्ता सा विकल्प्यते, लघोरेव वा, नाद्यः, पादान्तवर्णमात्रस्य तेनैव गुरुताविकल्पे पक्षे लघुत्वस्यापि सिद्धत्वात्पादादावित्यस्य वैयर्थ्यप्रसङ्गात्, लघ्वंशेऽप्राप्तविकल्पः, गुर्वंशे प्राप्तविकल्प इति विरुद्धार्थद्वयकृतवाक्यभेदप्रसङ्गाच्च। न द्वितीयः, तेनैव पाक्षिकलघुतायाः सिद्धौ पुनर्विधानवैयर्थ्यात्, 'तरुणम्' (वृ० र० १-११) इत्युदाहरण एव द्वियीयचतुर्थपादान्तयोर्लघ्वोर्गुरुत्वाभावे च्छन्दोभङ्गप्रसङ्गाच्च। न तृतीयः, लघोस्तत्राप्रस्तुतत्वात्, असंयोगपरस्यापादान्तगुरोरक्रमपरत्वात्पाक्षिकलघुत्वाभावप्रसङ्गाच्चेति चेत्, अत्र पादान्तवर्णमात्रमुद्दिश्य विकल्पितं गुरुत्वं तेन विधीयेत इति विधेयोद्देश्ययोरेकैकावच्छेदादर्थद्वयस्यार्थसिद्धत्वाद्वाक्यभेदाभावः पौरुषेयत्वाद्वा स न दोषः। पादादाविति च तस्यैव विषयं प्रदर्शयद्विवरणम्। तरुणमित्यादिषु गुरोर्लघुतायां तृतीयपाद उदाहरणम्, लघोर्गुरुतायां च द्वितीयचतुर्थपादयोरुदाहरणमित्यापातत उत्तरं भवति। वस्तुतस्त्वप्रस्तुतस्याप्यर्थतो बुद्धिस्थस्य लघोरेव गुरुता तेन विकल्प्यते। पादान्तगुरोस्तु लघुता संयोगपरस्यैवेत्यनेनैवोच्यते। अक्रमपरस्य तु पादान्तगुरोर्लघुता नेष्टैव। अत एव 'गन्ते' (पि. सू. २-१०) इति सूत्रे "गृ ल्" (पि. सू. २-९) इति पूर्वसूत्राद् गृग्रहणमनुवर्त्य गृशब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्तमानस्य गुरुसंज्ञाऽतिदिश्यते इति वृत्तिकारेणोक्तम्। इदं च गुरोर्लघुत्वं संयोगनिमित्तकगुरोरेव, न दीर्घादेः। अत्र सोहादाहरणो मामकः संग्रहश्लोकः—

बालक्रीड़ा

यहां चतुर्थ पाद के आरम्भ के अक्षर ग्रा में ग् और रेफ का संयोग है अतः उक्त निर्णय के अनुसार उसको गुरु मानना चाहिए किन्तु यदि

सेतुः

अन्यथा स्वागतेति रनभाद् गुरुयुग्ममिति सूत्रासङ्गतेरिति दिक् ।

सरस्वतीकण्ठाभरणकारस्तु

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न छन्दोभङ्गमप्याहुस्तदा दोषाय सूरयः

नारायणी

युक्तपरत्वनिमित्तकप्रान्तगुरोरेव वेष्यते लघुता ।
पादान्तस्थलघोरिह गुरुता वेष्टस्य जानीहि ।। इत्यलं प्रपञ्चेन।

इदं चोपलक्षणं प्रशब्दे ह्रशब्दे च परतोऽपादान्तस्थस्यापि लघुतायाः कवियोगे दर्शनात् । तथा च कुमारसम्भवे-''गृहीतप्रत्युद्गमनीयवस्त्रा'' ( कु० ७-११ ) इति प्रशब्दे परतस्तस्य लघुता दृष्टा । माघे च— ''प्राप्य नाभिह्लदमज्जनमाशु''२ ( शि० व० १०-६० ) इति । अन्यत्रापि- ''तव ह्रियापह्रियो मम ह्रीरभूत'' ह्रशब्दे परतो लघुता दृष्टा । अन्ये तु संयोगमात्रे परभूते लघुत्वमतीवतीव्रप्रयत्नतयेत्याहुः । अत एव सरस्वती कण्ठाभरण उक्तम्—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ।। ( सर० १-१२३)

तथा च कविप्रयोगाः रायायणे—

कृतार्थाश्च कृतार्थानां मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ।। इति ।

एवं तदार्या नृपवीरसिंह ! सीता वचः प्राह विषादयुक्तम् ।
एतच्च श्रुत्वा गदितो मया त्वं सीतोपलम्भे प्रकुरुष्व बुद्धिम् ।।(इति च ।)

बालक्रीड़ा

गुरु मानते हैं तब आर्या छन्द का जो नियम है कि आर्या के तीसरे पाद में १२ मात्राएँ होनी चाहिए उसके विरुद्ध यहां उस गुरु के कारण १३ मात्राएँ हो जाने से वह नियम कट जाता है अतः उसके अपवाद

सेतुः

इत्याह। एतेन छन्दोभंगभीत्या पूर्वोक्तमाद्यश्लोके ह्रद शब्दम- पनीय नद

नारायणी

तव ह्रियाऽपह्रियौ मम ह्रीरभूच्छ्शिगृहेऽपि हृतं न धृता ततः।
बहुलभ्रामरमेचकतामसं मम प्रिये! क्व समेष्यति नो पुनः॥ (इति च।)

अन्यत्र च—'धनं प्रदानेन श्रुतेन कर्णौ' इत्यादि च। प्राकृतेऽपि—जह णहाउ

ओइण्णे अद्धमन्त (?) मुल्लापिअमंसुअद्धन्तम्।
तह अण्हाआसि तुमं सच्छे गोलाणईतुहे॥
(यथा स्नातुमवतीर्णे आर्द्रीभूतमुल्लसितमंशुकार्धान्तम्।
तथा च स्नातासि त्वं स्वच्छे गोदानदीतीर्थे॥ इति।)

अत्र द्वितीयैकादशत्रयोविंशतिवर्णानां संयोगपरत्वाद् गुरुत्वेऽपि ण्हल्हादि-संयोगस्यातितीव्रप्रयत्नोच्चारणेन पूर्वस्य लघुतायां न च्छन्दोभङ्गो भवति। इदं च महाकविप्रयोगदर्शने भवति, न तु स्वेच्छया। अत एवाहुः—

क्वचिदपि संयुक्तपरो वर्णो लघुरत्र दर्शनेन यथा।
परिह्लसति चित्तधैर्यं दारकटाक्षेषु निर्वृत्तम्॥ इति।

तीव्रप्रयत्ने तु गुरुतैव। 'अथ प्रजानामधिपः प्रभाते' ( रघु० १–३ ) इत्यादौ। तथा इ-हिं-उं-हुं-काराणामेकारौकारयोश्च केवलयोः सव्यञ्जनयोर्वा प्राकृतादिभाषासु विभाषया गुरुता भवति। तदुक्तम्—

इ-हिं-कारौ बिन्दुयुतौ ए-ओ शुद्धौ च वर्ण-मिलितौ च।
रहयोर्व्यञ्जनयोगे सविभाषं सर्वमेव लघु॥ इति।

अत्र इ-हिं-काराविस्युपलक्षणम्। इं-हिं-ए ओ एतेषूदाहरणम्—

बालक्रीडा

को यहां बतलाया कि जहां क्रम संज्ञक वर्ण आगे रहे वहां पूर्व के अक्षर को लघु मानना चाहिए। तदनुसार यहां १२ ही मात्राएं मानी गई

**अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥११॥**
**अब्धिभूतरसादीनां ज्ञेया सञ्ज्ञात्र लोकतः ।**

सेतुः

शब्दः पठनीय इति दुर्घटवृत्तिकारोक्तमनादेयम् ॥११॥

अब्धीति । अब्धयोऽनुष्टभि ख्यातमित्यादौ व्यवहृतानामिति शेषः ।

नारायणी

माणिण माणाह काइं फलमेओ जे चरणमिलु कान्त ।
सहजें भुअङ्गमु जइ णमइ तह किं करिअमणिमन्त ॥
(मानिनि ! मानैः किं फलमेष यच्चरणमिलितः कान्तः ।
सहजेन भुजङ्गमो यदि नमति तत्र किं क्रियते मणिमन्त्रैः ॥)

अत इं हिं-ए-ओ इत्येतेषां गुरुतायां दोहाच्छन्दसोऽधिकमात्रताऽऽपद्येत । रहव्यञ्जनसंयोगे तूदाहृतम् । तथा प्राकृतादिषु दीर्घस्यापि त्वरितपाठे लघुता । तथा द्वयोस्त्रयाणां वा वर्णानां त्वरितपाठे एकवर्णता भवति । तदुक्तम्—

दीर्घाक्षरमपि जिह्वा ह्रस्वं चेत्पठति भवति लघु ।
द्वौ वा त्रीनथ वर्णानेकं जानीहि शीघ्रपठनाच्च ॥ इति ।

अत्रोदाहरणमूह्यम् । अयं प्राकृतविचारः पञ्चमाध्यायान्तवक्ष्यमाणप्राकृतच्छन्दःसूपयोगात्कृत इत्यलं बहुना ॥ ११॥

परिभाषान्तराण्याह—

लोकतो लोकव्यवहारादब्ध्यादीनां संज्ञाः संक्षेपेण ज्ञायन्ते इति संज्ञा संज्ञीभूताः । चतुरादिसङ्ख्या इति यावत् । ज्ञेया यतिनियमेषु । तद्यथा—

बालक्रीडा

१३ नहीं । जिससे आर्या छन्द का नियम भग्न नहीं हुआ ॥११॥

अब्धि की ४ । भूत की ५। रसकी ६। आदि पद से अश्व एवं मुनि की ७। वसु एवं नाग की ८। ग्रह की ९। दिशाकी १०। सूर्य एवं आदित्य की

## ज्ञेयः पादश्चतुर्थोंऽशो यतिर्विच्छेदसंज्ञिका ॥१२॥

### सेतुः

चतुर्थांश इति श्लोकस्येति शेषः । आर्यादिषु वक्ष्यमाणाया यतेः स्वरूपमाह विच्छेदेति ॥१२॥

### नारायणी

अब्धयश्चत्वारः, भूतानि पञ्च, रसाः षट् । आदिपदादश्वा मुनयश्च सप्त, वसवो नागाश्चाष्टौ, ग्रहा नव, दिशो दश, रुद्रा एकादश, आदित्या द्वादश, इत्येवमादि ज्ञेयम् । अब्ध्यादिशब्दाः स्वपर्यायाणां स्वार्थसंख्यासमानसंख्यार्थानां चाप्युपलक्षकाः । तेन समुद्रवेदादयोऽपि लोके ज्ञेयाः । तथा छन्दःशास्त्रत्वाच्छन्दसश्चतुर्थो भाग पादो ज्ञेयः पदादिव्यवहारेषु । अंशः समचतुर्थांशोऽत्र न ग्राह्यः । किं तु यावान्यत्रोक्तः । तथा च समानां विषमाणां चोद्गतादीनां पादाः सङ्गृहीता भवन्ति । पादशब्दः स्वपर्यायाणामङ्घ्रिचरणादिशब्दानामुपलक्षकः । तथा यतिर्यतिशब्दो विच्छेदे विरामे संज्ञितः परिभाषितः संज्ञाकृतो ज्ञेयः । 'संज्ञिता' इति पाठे यतिशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता ज्ञेयेति च विपरिणतानुषङ्गः । इयं च यतिस्तृतीयान्तेष्वब्ध्यादिनिर्देशेषुपतिष्ठते । साकाङ्क्षत्वात् । अब्यादिसङ्ख्येष्वक्षरेषु यतिः स्यादित्यर्थः । इयं च यतिः श्रुतिसौकर्यार्थं नियतस्थानेषु कार्या । यतिनियमस्थानानि च वृद्धैः सङ्गृहीतानि—

> यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः ।
> समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥

### बालक्रीड़ा

१२ संज्ञा होती है इसको लोक व्यवहार से समझना चाहिए। छन्द के चतुर्थ अंश को पाद समझना चाहिए तथा यति की संज्ञा नाम विच्छेद है यह भी समझना चाहिए ॥१२॥

नारायणी

क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्वान्तवत्स्वरः सन्धौ कक्चिदेव परादिवत्।
एष्टव्यो यतिचिन्तायां यणादेशः परादिवत् ॥
नित्यं प्राक्पदसम्बद्धाश्चादयः प्राक्पदान्तवत्।
परेण नित्यसम्बद्धाः प्रादयश्च परादिवत् ॥ इति।

एषामर्थ उदाहरणेन स्पष्टीक्रियते। "यतिः सर्वत्र पादान्ते" इत्यस्योदाहरणम्—

अत्र मे सखि ! शिखण्डमण्डने पुण्डरीककमनीयलोचने।
श्याममतामरसदामकोमले रामनाम्नि मनो मनोरमे ॥

( प्र० रा० २-२३ ) इत्यादि।

प्रत्युदाहरणं तु—'नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे। इत्यादि।

"श्लोकार्धे तु विशेषतः" इत्यस्योदारणं पूर्वोदारणे "दधीति। कल्पव्ययेन" ( वृ० र० १-११ ) इत्यत्र। सन्धिर्न भवति स्पष्टविभक्तिकता च भवतीति विशेषः। सन्धौ प्रत्युदाहरम्—

श्यामा कामाकुला रामा वामा भोगाय आप्यतेऽ—।
नेकजन्मसु पुण्यानां निचयो न चितो यदि ॥

अत्र पूर्वरूपकरणम्। स्पष्टविभक्तिकतायां प्रत्युदाहरणम्—

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी—।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम्।

अत्र समासकरणम्। "समुद्रादि" इत्यत्रोदाहरणम्—"तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी" ( मे० १-२ ) इति। अत्र मन्दाक्रान्तायां चतुर्षु स्पष्टविभक्तिकता। ततः षट्स्वव्यक्तविभक्तिकता। 'पादान्ते' इत्यस्यापि विशेषणं "व्यक्तविभक्तिके" इति। तत्रोभयोदाहरणम्—

नारायणी

स्यन्दने गरुडकेतुलाञ्छने कुण्डिनेशतनयाधिरोपिता ।
केनचिन्नवतमालकोमल-श्यामलेन पुरुषेण नीयते ॥

क्वचिदिति । समुद्रादौ या यतिः सा पदमध्येऽपि क्वचिद्भवति । यदि पदस्य यत्यपेक्षया पूर्वपरभागावेकवर्णौ न घटत इत्यर्थः । अत्रोदाहरणम्—"पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ" इति । समुद्रादावित्युक्तेः पादान्तयतिः पदमध्ये न भवति । प्रत्युदाहरणम्—

"प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतुम् ।"

पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दोषाय । सा च धातुनामप्रत्ययाऽव्ययभागभेदेन चतुर्धा । तत्र क्रमेणोदाहरणानि—"एतासां राजति सुमनसां दाम कण्ठावलम्बि", "स्वीकुर्वन्ति हि सुधियः प्रकुर्वते च", "दुःसोढो दाशरथिमहिमा राक्षसानां बभूव", "सुरासुरशिरोनिघृष्टचरणारविन्दः शिवः" "स्खलति सुरवधूकल्पासु रामासु को न" "भुवि सुरगुरुदेशीयाः कियन्तो न सन्ति", "कलिवशविवशः सम्प्रत्ययं जीवलोकः" "रामेशं वा प्रतिदिनमुताहो रमेशं भजामः" । एवमन्यान्यपि सङ्कीर्णान्युदाहरणानि ज्ञेयानि । "पूर्वान्तवत्स्वरः सन्धौ" इत्यस्यार्थः । योऽयं पूर्वपरयोरेकादेशः स्वरः सन्धौ सवर्णदीर्घादिः, स प्रायः पूर्वान्तवत्क्वचिदेव परादिवच्च द्रष्टव्य इति । अत एव "अन्तादिवच्च" (पा० सू० ६-१-८) इति पाणिनिः सस्मार । पूर्वान्तवद्भावे यथा—"कस्ते दारिद्र्यदावानल ! वदतु यशो वायदूकोऽपि दाने" "स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा" ( मे० १-५१ )

परादिवद्भावे यथा—'अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना' ( वेणी. ३-९ ) अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद् भवति । तद्भक्तत्वात् ।

यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ । इति ।

पूर्वान्तवत्स्वरः सन्धावित्यादेरपि शेषः । तेन—'अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति' इत्यादौ यतिर्दुष्यति । तत्रापि पूर्वभागस्यैवैकवर्णताया

नारायणी

दोषः न तूत्तरस्य । तदर्थमेव स्वरसन्धावनेनापवादकरणात् । यणादेशः परादिवदित्यत्रोदाहरणम्—'सप्ताकूपारपारप्रथितपृथुयशस्सर्थिसार्थे कृतार्थे ।' व्यञ्जनस्यापि परादिवद्भाव इष्यते । यथा—'इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे' (मे० १-५) इति । 'नित्यं प्राक्पदसम्बद्धा' इति । तेभ्यः पूर्वा यतिर्न कार्येत्यर्थः । यथा—'बाले ! भूपतिमौलिलालितपदद्वन्द्वत्वबुद्धेऽपि च' । आदिपदात् 'रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा' । प्रत्युदाहरणं तु—

नमः शिवाय कृष्णाय च दानवविनाशिने ।

'नित्यं प्राक्पदसम्बद्धा' इति किम् ? 'तथाऽऽद्रियन्ते न बुधाः सुधामपि' ( नै० १-१ ) । चादय इति किम् ?

सम्पत्तिः सैव रमणीसखैर्या भुज्यते भुवि ।

अत्र समासान्तटच्प्रत्ययान्तसखिशब्दस्य नित्यं प्राक्पदसम्बद्धत्वेऽपि यतिर्न दुष्यति । 'परेण नित्यसम्बद्धा' इति । परादिति किम् तेभ्यः परा यतिर्न भवतीत्यर्थः । 'प्रस्मृतः किमथवा पठितो नु' ( नै० ५-१२५ ) आदिपदात् 'निजगृहे जयिनं तिसृणां पुराम्' । परेण नित्यसम्बद्धा इति किम् ? कर्मप्रवचनीयेभ्यः पराऽपि यतिर्भवत्विति । यथा—

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।

प्रादय इति किम् ?

'राक्षसाधिपबलं प्रणाशयाञ्चक्रतू रघुवरौ वरौ रणे ।

अयं त्वनेकाक्षराणां चादीनां प्रादीनां चादिवद्भावः पादान्तयतावेवेष्यते । एकाक्षराणां तु पादान्तयतौ पादमध्ये समुद्रादियतौ च । तदुक्तं कविकल्पलतायाम्—

एक स्वरोपसर्गेण विच्छेदः श्रुतिसौख्यकृत् । इति ।

पादान्ते यतौ प्रत्युदाहरणं तत्रैवोक्तम्, यथा—

पिनाकपाणिं प्रणमामि स्मरशासनम् । इति ।

नारायणी

पादमध्ययतौ प्रत्युदाहरणम्—'विष्णुं रुद्रं च खलु भजतां नैव संसारबन्धः' अनेकाक्षराणां तु पादमध्ये चामीकरादिष्विव पूर्वापरभागयोरेकवर्णत्वाद्यतिरिष्टैव । अत्र चादीनां यथा—'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' (मे० २-३२) इत्यादि । प्रादीनां यथा—'दूरारूढप्रमोदं हसितमिव परिस्पृष्टमाशासखीभिः' । अत्र 'नित्यं प्राक्पदसम्बद्धा' इत्यत्र च 'स्वादु स्वच्छं च सलिलमिदं प्रीतये कस्य न स्यात्' इति । 'नित्यं प्राक्पदसम्बद्धा इति किम् ? 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' (मे० १-३८) इति । 'परेण नित्यसम्बद्धा' इत्यत्र च 'दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः' इत्यादि वृत्तिकारैः समुद्रादियतिरुदाहृता । अन्ते च अयं तु पादान्तयतावन्तादिवद्भाव इष्यते, न तु पादमध्ययतौ' इत्यादि स्वयमेवोक्त तद्विचारणीयम् । तथा—

अनुक्तयतिकेऽप्येवं कार्या श्रुतिसखा यतिः ।

तदुक्तं कविकल्पलतायाम्...

एवं यथा यथोद्वेगः सुधियां नोपजायते ।
तथा तथा मधुरतानिमित्तं यतिरिष्यते ॥

शुक्लाम्बरादयस्तु पादान्त एव यतिमाहुः । भरतादयस्तु यतिमेव नेच्छन्ति । अत एव कविप्रयोगाः । अत्र भर्तृहरेः—

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥
कदाचिदपि पर्यटञ्शशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् । (नी० श० ५) इति ।

जयदेवस्यापि—'भावं शृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि' (गी० गो० १२-१२) इति । तदुभयं बहुविरोधाच्चिन्त्यम् । इयं च यतिर्वृत्तस्वरूपाद् भिन्नाऽपि गुणालङ्काराद्यपेक्षयान्तरङ्गाङ्गत्वात्सूत्रकारादिभिर्लक्षणमध्ये निबद्धा, न तु वृत्तस्वरूपतया । मात्रागुरुलघुनियमनं हि वृत्त-

युक् समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।

सेतुः

युक्समिति समपादस्य संज्ञा यथा वक्ष्यत्यनुष्टुप्प्रकरणे युजोर्जेन सरिद्भर्तु रित्यादि । अयुगिति विषमपादस्य संज्ञा । यथा च तत्रैव वक्ष्यति

नारायणी

लक्षणं, निरामात्मकत्वं च यतेः । अत एव वामनेन काव्यालङ्कारसूत्रेषु 'न वृत्तदोषात् पृथग् यतिदोषो वृत्तस्य यत्यात्मकत्वात्' (का० सू० २-२-५) इत्याशङ्क्य 'न, लक्ष्मणः पृथक्त्वात्' (का० सू० २-२-६) इति परिहृतमित्यलम् ।। १२ ।।

परिभाषान्तरमाह—

समं द्वितीयचतुर्थादिस्थानं युगिति सद्भिर्निगद्यते कथ्यते । विषमं चैक आदिस्थानं सद्भिरयुक् निगद्यते । चकारात्समस्य युग्मौजसंज्ञे विषमस्या युग्मौजसंज्ञे इत्यादि ज्ञेयम् ।

पदैः पादाख्यैर्घटितं पद्यम् । तद् द्विविधम्-जातिर्वृत्तं चेति । जातिर्नियत

बालक्रीड़ा

छन्दः शास्त्र के जानकार लोग द्वितीय एवं चतुर्थ पाद को सम एवं युक् युग्म और अनोज कहते हैं प्रथम एवं तृतीय पाद को विषम अयुक् अयुग्म एवं ओज कहते हैं । जिस के फलस्वरूप सम अर्धसम एवं विषम वृत्त होते हैं ।

यहां कुछ लोग कहते हैं पद्य चतुष्पद है उस के वृत्त एवं जाति ये दो भेद हैं । जिसमें अक्षरों की संख्या होती है वह वृत्त है और जो मात्राओं से बनता है वह जाति है । यह एक मत है दूसरा मत है कि जाति भी दो प्रकार की है जिसमें एक भेद गणों से बनता है अतः गणछन्द है और दूसरा मात्राओं से बनता है अतः मात्रा छन्द है । इसको जानने का कोष्ठक भी बनाते हैं ।

**सममर्द्धसमं वृत्तं विषमं च ततः परम् ॥१३॥**
**अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।**
**तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥१४॥**

सेतुः

चपला वक्त्रमयुजोरित्यादि । चकारात्समपर्यायो युग्मशब्दो विषमपर्याय

नारायणी

मात्रिका । वृत्त नियतगुरुलघुविन्यासम् । तत्र जातिरार्यादि । वृत्तामुक्तादि समार्धसमविषमात्मकम् । तदुक्तम्—

पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षमरसङ्ख्यातं जातिर्मात्राकृता भवेत् ॥ इति ।

इत्येतत्सर्वं मनसि निधाय वृत्तप्रभेदानाह—

समाख्यमर्धसमाख्यं विषमाख्यं चेति त्रिधा वृत्तमित्यर्थः ॥१३॥

त्रिविधस्यापि वृत्तस्याऽन्वर्थसंज्ञामाश्रित्यक्रमेण स्वरूपमाह श्लोकत्रयेण—

बालक्रीड़ा

वृत्त और जाति बोधक चक्र

| जाति | १ गणच्छन्द | | २ मात्राच्छन्द |
|---|---|---|---|
| वृत्त | १ सम | २ अर्धसम | ३ विषम |

किन्तु यह सब ग्रन्थकार को सम्मत नहीं है क्योंकि ग्रन्थकार ने अपने ग्रन्थ का नाम वृत्त रत्नाकर लिखा है माना है । इसमें आर्या एवं वैतालीय आदि को भी वृत्त ही शब्द से संगृहीत किया है । अतः वृत्त से अतिरिक्त यह नाम करण केवल नाम करण ही है वस्तु इसमें कुछ नही है ॥१३॥

जिसके चारो पदों में समान लक्षण होता है वह समवृत्त है ॥१४॥

प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद् वृत्तं तदर्धसममुच्यते ॥१५॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहु विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥१६॥

## सेतुः

ओजः शब्दश्च ज्ञेयः । यथा वक्ष्यति वैतालीयप्रकरणे यदा समावोजयुग्मकाविरयादि । सममिति तृतीयेऽध्याये वक्ष्यति गुः श्रीरित्यादि । अर्द्धसममिति यथा चतुर्थे वक्ष्यति विषमे यदि सौ सलगा इत्यादि । अत्र वृत्तमुक्तादीति भट्टोक्तं व्याख्यानं चिन्त्यम् । उपचित्रादित्यागे वीजाभावात् । विषमञ्चेति यथा पंचमे लक्ष्यति मुखपादोऽष्टभिभिरित्यादि । एषां त्रयाणां स्वरूपं श्लोकत्रयेणाह ॥१३।१६॥

## नारायणी

यस्याङ्घ्रयः पादाश्चत्वारोऽपि तुल्येन लक्षणेन लक्षिता युक्ताः, तच्छन्दःशास्त्रविशारदाश्छन्दःशास्त्रत-त्वज्ञाः समं वृत्तं वदन्ति । द्वितीयश्चरणस्तुर्यवच्चतुर्थवत् । तथा चार्धं समं यस्य तदर्धसममित्यन्वर्थसंज्ञा । यस्य पादचतुष्टयेऽपि परस्परं लक्ष्म लक्षणं भिद्यते तद्विषममाहुः, विगतं समं यस्मादिति व्युत्पत्तेः । तत्र समं पथ्यादि, अर्धसमं द्रुतमध्यादि, विषमं पदचतुरूर्ध्वादि ॥१४।१६॥

## बालक्रीड़ा

जिसका तृतीय पाद प्रथम पाद के लक्षण के समान लक्षण वाला हो और द्वितीय पाद चतुर्थ पाद के तुल्य लक्षण वाला होता है उसे अर्ध समवृत्त कहते हैं ॥१५॥

जिसके चारों पादों में परस्पर में भिन्न २ लक्षण होते हैं उसको छन्दः शास्त्र के विशारद विषम वृत्त कहते है ॥१६॥

**आरभ्यैकाक्षरात्पादा देकैकाक्षरवर्धितैः ।**
**पृथक् छन्दो भवेत्पादै र्यावत् षड्विंशतिं गतम् ॥१७॥**

सेतुः

अत्रयो यस्येत्यादिनास्य चत्वारः पादास्तुल्यास्तत्समा यस्य । प्रथमतृतीययो द्वितीय चतुर्थयोश्च पादयोः साम्यन्तदर्द्धसमं यस्य । चत्वारोऽपि पादा विलक्षणास्तद्विषममित्यर्थः । आरभ्येति एकाक्षरमारभ्य षड्विंशत्यन्तमेकाक्षरवर्द्धितैः पादैः समवृत्तं तृतीयाध्याये पृथक् द्रष्टव्यम् । तदूर्ध्वमिति षड्विंशत्यूर्ध्वं चंडवृष्टयादि । अत्रादिना व्यालजीमूतादय इति सुधीभिश्चिन्त्या अर्णार्णवयोस्त्यागस्य निर्बीजत्वात् ॥१७॥

नारायणी

एकाक्षरं पादमारभ्यैकेनाक्षरेण कविना वर्धितैः पादैः कृत्वा पृथग्भिन्नं भिन्नं छन्द उक्तादि भवेत् । वृद्धयवधिमाह--यावदिति । यावत्षड्विंशति २६ षड्विंशतिसङ्ख्याकं पादं प्रति गतं गमनं भवति । षड्विंशत्यक्षरपाद पर्यन्तं वृद्धिर्भवतीत्यर्थः ॥ १७ ॥

बालक्रीड़ा

यह वृतों के समादि भेद आर्या एवं वैतीयादि में नहीं होता है । किन्तु सामान्यतः वृत्तका अर्थ छन्द माना है। इस के अनुसार वृत्त या छन्द आर्यादि भी हैं अतः गड़बड़ है । क्यों कि उनमें पूर्वार्द्ध एवं उत्तरार्द्ध के रूप से व्यवस्था की है । यह ग्रन्थकार के ज्ञान में अधूरापन है ।

जहां पूर्वापरीभाव से नियत गुरु एवं लघु वर्णों का विन्यास होता है उस वर्णछन्द के ४ पाद होते हैं । उनमें जिसके चारों पादो में एक एक अक्षर होता है वह एकालर छन्द है । और इसी तरह जिसके चारों पाद दो २ या तीन २ या चार २ अक्षरों के होते हैं वे द्वयक्षर त्र्यक्षर एवं चतुरक्षर छन्द कहलाते है इसी तरह के एक-एकअक्षर के बढ़ाते २ जहां २६ अक्षर तक का एक २ पाद होता है वे २६ प्रकार के पृथक्२छन्द है ॥१७॥

**तदूर्ध्वं चण्डवृष्ट्यादि-दण्डकाः परिकीर्तिताः ।**
**शेषं गाथास्त्रिभि षड्भिश्चरणैश्चोपमलाक्षिताः ॥१८॥**

सेतुः

शेषमिति । ततस्त्रिभिः षड्भिश्चरणैरुपलक्षितानां गाथानामकथनं शेषमित्यर्थः ॥१८॥

नारायणी

अधिकाक्षरपादस्य छन्दसः संज्ञामाह—

षड्विंशत्यक्षरपादाच्छन्दस ऊर्ध्वं सप्तविंशत्यक्षरपादं छन्दश्चण्डवृष्ट्यादि दण्डकसंज्ञं भवति । सप्तविंशत्यक्षरादेकैनेन रगणादिना वृद्धिः, न त्वेकैकाक्षरेण । आदिपदादर्णवादि ॥

इह शास्त्रे विशेषलक्षणेनाऽलक्षितस्य छन्दसः कविभिश्च ग्रथ्यमानस्य सामान्यसंज्ञामाह—

शेषं विशेषनिरूपितादन्यत् । तदेवाह—त्रिभिरिति । क्वचित्त्रिभिः, क्वचित्षड्भिः, चकाराद् दशभिर्विलक्षणगुरुलघुक्रमवद्भिन्यूनाधिकाक्षरैश्च चरणैर्युक्ता यास्ता गाथा ज्ञेया इत्यर्थः ॥१८॥

पूर्वोक्तानामेकाक्षरपादमारभ्य षड्विंशत्यक्षरपादावधिकानां छन्दसां सामान्यतो जातिसंज्ञामाह —

बालक्रीड़ा

इन २६ अक्षर के पादवाले छन्द के ऊपर अक्षरों वाले पादों से दण्डक बनते हैं जिन की संज्ञा चण्ड वृष्टि आदि कही गई है । इनसे भी जो छन्द बच गये हैं वे गाथायें हैं। इन गाथाओं का स्वरूप तीन पादों से या छ पादों से या ५ पादों से ७ पादों से लक्षित होता हैं ॥१८॥

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥१९॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शक्वरी सातिपूर्वा स्यादष्टचत्यष्टी ततः स्मृते ॥२०॥

## सेतुः

एकाक्षरादिषड्विंशत्यन्तानां छंदसां क्रमेण संज्ञाः श्लोकत्रयेणाह उक्तेत्या-

## नारायणी

एकाक्षरपादा 'उक्ता' नाम। इयं च जातिसंज्ञा। अवान्तरसंज्ञास्तु वक्ष्यन्ते। एवमितरत्रापि द्व्यक्षरपादा 'अत्युक्ता'। एवं शेषा अपि ज्ञेयाः। अन्या सुपूर्विका, अनन्तरोक्ता प्रतिष्ठैव सुपूर्वा सती सुप्रतिष्ठा नामाऽन्या जातिरित्यर्थः। साऽतिपूर्वेति। सा शक्वर्यतिपूर्वा अतिशक्वरीत्यर्थः। ननु सूत्रकारेण समच्छन्दसां गायत्र्यादीनामेवोक्तत्वादुक्ताद्युक्तेरुत्सूत्रत्वमिति चेन्न। 'द्विकौ ग्लौ' (पिं० सू०) इत्यादिसूत्रोक्तैकाक्षरादिप्रस्तारस्य तत्संज्ञायां ज्ञापकत्वात्। कविभिः प्रायेणाप्रयुक्तत्वात्तेषां लक्षणावसरेऽनुक्तिरिति भावः। ताः—१ उक्ता, २ अत्युक्ता, ३ मध्या, ४ प्रतिष्ठा, ५ सुप्रतिष्ठा, ६ गायत्री, ७ उष्णिक्, ८ अनुष्टप, ९ बृहती, १० पङ्क्तिः, ११ त्रिष्टुप्, ११ जगती, १३ अतिजगती, १४ शक्करी, १५ अतिशक्करी, १६ अष्टिः, १७ अत्यष्टिः, १८ धृतिः, १९ अतिधृतिः २० कृतिः, २१ प्रकृतिः, २२ आकृतिः, २३ विकृतिः, २४ सङ्कृतिः, २५ अतिकृतिः, २६ उत्कृतिः। अत्र प्रतिपादमेकैकाक्षरवृद्धौ सकले छन्दसि चतुरक्षरा वृद्धिर्भवति। तत्रोक्ता चतुरक्षरा। अत्युक्ताऽष्टाक्षरा। एवमुत्तरत्रापि। उत्कृतिश्चतुरधिकशताक्षरा ॥१९।२०।२१॥

## बालक्रीड़ा

एक अक्षर से आरब्ध तथा २६ पर्यन्त अक्षरों से बने जिन छन्दों को

धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः सङ्कृतिश्चापि तथातिकृतिरुत्कृतिः ॥२१॥
इत्युक्ताश्छन्दसां सञ्ज्ञाः क्रमशो वच्मि साम्प्रतम् ।
लक्षणं सर्ववृत्तानां मात्रावर्णानुपूर्वकम् ॥२२॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे संज्ञाभिधानो नाम प्रथमोऽध्यायः ।

### सेतुः

दिना द्वितीये । मात्रावृत्तान्युक्त्वा समवृत्तानां लक्षणं साम्प्रतं तृतीयाध्याये वच्मि वक्ष्यामि वर्तमानसामीप्ये वर्तमानवत्प्रत्ययः ॥२२॥

इति श्रीमदग्निहोत्रिकुलतिलकायमान श्रीमहायाजिभर्तृसूनुभास्कर विरचिते वृत्तरत्नाकरे सेतौ प्रथमोऽध्यायः ॥१॥

### नारायणी

उक्तानुवादपूर्वकं वक्तव्यमाह—

छन्दसामित्थमुना प्रकारेण जातिसंज्ञा उक्ताः । साम्प्रतमिदानीं मात्रा-वृत्ताऽनुपूर्वकं मात्रावृत्तमादितः कृत्वा सर्वेषां वृत्तादीनामुक्तानां क्रमशः क्रमेण लक्षणं वच्मि वदामीति योजना । प्रथमं मात्रावृत्तमुच्यते । तत उद्देशक्रमेण वर्णवृत्तमुच्यत इत्यर्थः ॥२२॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यश्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां परिभाषाऽध्यायःप्रथमः ॥१॥

### बालक्रीड़ा

कहा है उनके विशेष नाम या संज्ञा को कहते हैं । ये उक्ता अत्युक्ता से लेकर उत्कृति तक हैं । १९।२०।२१।

---

उक्ता अत्युक्ता आदि छन्दों के भेदों के समझने के उपयोगी चक्र—

| क्रमाङ्क | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| छन्द का नाम | उक्ता | अत्युक्ता | मध्या | प्रतिष्ठा | सुप्रतिष्ठा | गायत्री | उष्णिक् | अनुष्टुप् | बृहती |
| प्रतिपाद के अक्षरों की संख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| चारों पादों के अक्षरों की संख्या | ४ | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ३६ |
| प्रस्तार से प्राप्त प्रतिच्छन्द की संख्या | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ |

उसके बाद का चक्र

| क्रमाङ्क | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |
|---|---|---|---|---|---|---|---|---|
| छन्द का नाम | पङ्क्तिः | त्रिष्टुप् | जगती | अतिजगती | शक्वरी | अतिशक्वरी | अष्टिः | अत्यष्टिः |
| प्रत्येकपाद के अक्षरों की संख्या | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |
| चारोंपादों के अक्षरों की संख्या | ४० | ४४ | ४८ | ५२ | ५६ | ६० | ६४ | ६८ |
| प्रस्तार से प्राप्त प्रतिच्छन्द की संख्या | १०२४ | २०४८ | ४०९६ | ८१९२ | १६<br>३<br>८४ | ३२<br>७<br>६८ | ६५<br>५<br>३६ | १३<br>१०<br>७२ |

उसके पश्चात् की चक्र

| क्रमाङ्क | १८ | १९ | २० | २१ | २२ | २३ |
|---|---|---|---|---|---|---|
| छन्द का नाम | धृतिः | अति-धृतिः | कृतिः | प्रकृतिः | आकृतिः | विकृतिः |
| प्रत्येक पाद के अ. की संख्या | १८ | १९ | २० | २१ | २२ | २३ |
| चारों पादों के अ. की संख्या | ७२ | ७६ | ८० | ८४ | ८८ | ९२ |
| प्र.से प्रा. प्रति. के अ. की संख्या | २६२१४४ | ५२४२८८ | १०४८५७६ | २०९७१५२ | ४१९४३०४ | ८३८८६०८ |

उसके आगे का चक्र

| क्रमाङ्क | २४ | २५ | २६ |
|---|---|---|---|
| छन्द का नाम | संकृतिः | अतिकृतिः | उत्कृतिः |
| प्रत्येक पाद के अक्षरों की संख्या | २४ | २५ | २६ |
| चारों पादों के अक्षरों की संख्या | ९६ | १०० | १०४ |
| प्रस्तार से प्राप्त प्रतिच्छन्द के अक्षरों की संख्या | १६७७७२१६ | ३३५५४४३२ | ६७१०८८६४ |

इस प्रकार छन्दों की संज्ञाओं को मैंने कह दिया अब मैं मात्रा एवं वर्णों के अनुक्रम से सब वृत्तों के लक्षण को कहता हूं ।।२२।।

इस प्रकार आचार्यमधुसूदनशास्त्री की कृति वृत्तरत्नाकर के प्रथम परिभाषाध्याय की हिन्दी टीका बालक्रीड़ा सम्पूर्ण हुई ।

# अथ द्वितीयोऽध्यायः ।

**लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।**
**षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥१॥**

## सेतुः

अथ पद्यद्वयेनार्यां लक्षयति लक्ष्मैतदित्यादिना । यत्र चतुर्मात्रा गणाः सप्त भवन्ति एकेन गुरुणाऽष्टमस्थानीयेन सहिताश्चैतदार्यायाः प्रथमेऽर्द्धे नियतं लक्ष्म लक्षणं ज्ञेयम् । एवं सप्तगणानामष्टाविंशतिमात्राः अष्टमस्थानीयगुरोस्तु द्वे मात्रे इति संयोजनात्—

त्रिंशन्मात्राविशिष्टमार्याप्रथमार्द्धस्य लक्षणम्पर्यवसितं तत्किं विशेषणेनेत्याह भवतीति । इह प्रथमार्द्धे विषमे विषमस्थाने प्रथम तृतीय पंचम सप्तमाख्ये मध्यगुरुरूपश्चतुर्मात्रत्वात्प्राप्तोऽपि जो जगणो न भवति समेत्व नियमः । क्व तर्हि नियमः स्यादत आह षष्ठ इति । षण्णाम्पूरणः षष्ठो जोवा

## नारायणी

अथ मात्रावृत्तानि विवक्षुः प्रथममार्यां लक्षयति लक्ष्मैतदिति द्वयेन ।

आर्यायाः प्रथमेऽर्धे एतन्नियतं सार्वत्रिकं लक्ष्म लक्षणं ज्ञेयम् । किं तद् । सप्तसङ्ख्याका गोपेता गुरुणा युक्ता गणाश्चतुर्मात्राः पूर्वोक्ताः । गुरूपेतत्वोक्त्या यद्यपि 'स्वरा अर्ध चार्यार्धम्' ( पिं० सू० ) इति सूत्रे अर्ध चेति ग्रहणात्सार्धाः सप्त गणा भवन्तीति सामान्यत उक्तम्, तथाप्यर्धगणस्थाने एको गुरुरेवान्ते कार्यः, न तु लद्वयमिति सुचेतनीयम् । इहार्यार्धे । विषमे प्रथमतृतीयादौ । स्थाने जो जगणो मध्यगुरुर्गणो न कार्यः । षष्ठस्त्वयं जगणः कार्यः । नलघू वा कार्यौ । नश्च लघुश्चेति नलघू । चतुर्लघुर्वा गणः कार्य इत्यर्थः । अन्ये तु स्वेच्छया ज्ञेयाः । षष्ठे

## बालक्रीड़ा

पं० केदार भट्ट ने आर्या में पूर्वार्द्ध एवं उत्तरार्द्ध की व्यवस्था की है अतः उसी के अनुसार कहते हैं आर्या के पूर्वार्द्ध में यह लक्षण नियत है कि इसमें चार लघु वाले सात गण और एक गुरु होता है । यहां विषम गण

षष्ठो द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥२॥

सेतुः

अथवा षष्ठो नलघू नश्च लघुश्च नलघू नगणस्त्रिलघुरेक इतरो लघुश्चेति चतुर्लघुरूपो गणः षष्ठो देय इति यावत्। तथा च जगण-चतुर्लघ्वन्यतर एव षष्ठ इति नियमः फलितः। यथात्रैव लक्षणसमन्वयः। लक्ष्मै इति द्विगुरुरूपश्चतुर्मात्र एको गणः। एवं तत्सप् इति द्वितीयः। तगणा इत्यन्त्यगुरुस्तृतीयः। गोपे इति द्विगुरुश्चतुर्थः ना। भव इत्यादिगुरुः पंचमः तिनेह इति मध्यगुरुः षष्ठो, विषमे इत्यन्तगुरुः सप्तम इति सप्तगणानामष्टाविंशतिमात्राः। ज इति चान्ते गुरुरिति तस्य द्वे मात्रे इति संयोजनात् त्रिंशन्मात्राः संति। प्रथमार्द्धे नास्ति विषमस्थाने जगणः षष्ठस्त्वस्त्येव इति ने

नारायणी

इति। द्वितीयलादित्यतः परं पूर्वमिति शेषः। षष्ठे न्ले षष्ठस्थाने चतुर्लघौ गणे कृते सति द्वितीयलात्तस्यैव षष्ठस्य चतुर्लघोर्गणस्य द्वितीयलघोः पूर्वं प्रथमलघ्वनन्तरं सयतिपदनियमो यतिसहितं पदं नियमेन समाप्यत इत्यर्थः। 'न्ले' इति प्रथमाद्विवचनं वा। ततश्च षष्ठे स्थाने यदि न्ले नलघू स्याताम्, तदा द्वितीयलात् पूर्वः यतिरित्यर्थः। परके न्ले, न-ले षष्ठापेक्षया परस्मिन्सप्तमे चतुर्लघौ कृते सति, मुखलात्सप्तमस्य प्रथमलघोः पूर्वं षष्ठगणान्ते सयति पदं नियम्यते। चरमे द्वितीये पुनरर्धे पञ्चमके न्ले चतुर्लघौ तस्मान्मुखलघोः पूर्वम्, अर्थाच्चेतुर्थान्ते, पदं समाप्यत इत्यनुषङ्गेण पूर्वपदाध्याहारेण च योज्यम्। इहेति। इहार्याचरमार्धे षष्ठो गणो लो लघुरेव भवति। न चतुर्मात्रिकं इति पूर्वार्धाद्विशेषः। उत्तरार्धे

बालक्रीड़ा

प्रथम-तृतीय, पञ्चम एवं सप्तम गण, जगण (मध्यगुरु वाला गण) नहीं होता है। हां यह जगण षष्ठ गण हो सकता है या फिर यहां न लघु

## सेतुः

इति। न च व्यंजनं चार्द्धं मात्रिकमित्युक्ते व्यंजनद्वयसंयोगस्यपसार्धं मात्रात्मकत्वात् लक्ष्मै इत्यादौ मात्राधिक्यात् त्रिशन्मात्रारूपलक्षणासंगतिरिति वाच्यम् अत्राच्मात्राणामेव गणनेन व्यंजनसंयोगानामतथात्वात्। न लघू वेत्यस्योदाहरणं तु द्वितीयपद्यप्रथमाऽर्द्धं ज्ञेयम्। अत्र षष्ठोऽयमिति षष्टस्थाने ज न इति सुधोक्तव्याख्यानमनादेयम्। प्रथमायाः यद्यर्थलक्षणापत्तेः यच्च न लघू वेत्यत्र नगण युक्तो लघुरिति सुल्लण आह तत्र नलघू इति द्विवचनाऽनुपपत्तेः ॥१॥

## नारायणी

एतावन्मात्रविशेषं वदताऽन्यत्पूर्वार्धलक्षणमेव भवतीति द्योतितम्।
यतिनियमं छन्दोमाणिक्यकारोऽप्याह—

> पूर्वार्धे षष्ठो जः खो वा खे चास्य लघुनि भवति यतिः।
> षष्ठः खपरोऽत्र यतिस्तुर्योऽप्यथ भवति चरमदले ॥ इति।

अस्यार्थः—ख इति चतुर्लघोर्गणस्य संज्ञा। पूर्वार्धे षष्ठो गणो जगणः खो वा कार्यः। खे तु षष्ठे गणे, अस्य लघुनि तदीयप्रथमलघ्वन्ते यतिर्भवति। यदि षष्ठः खपरः—खश्चतुर्लघुः परो यस्य स तथा सप्तमश्चतुर्लघुः स्यादित्यर्थः। तदात्र षष्ठान्ते वा यतिः। चरमदले—द्वितीयार्धे यदि तुर्यश्चतुर्थः खपरस्तत्रापि चतुर्थान्ते यतिरिति। यद्वा मूले पञ्चम्यौ ल्यब्लोपे। तेन द्वितीयलमादाय सयतिपदनियमः, सयतिकपदप्रारम्भनियम इत्यादिरर्थः। उभयथापि लक्ष्येऽविसंवाद एव। किं त्वेतस्मिन्व्याख्याने 'न्लौ चेत्पदं द्वितीयादि' (पिं. सू. ४-१८) 'सप्तमः प्रथमादि' (पिं. सू. -१९) इति सूत्रानुग्रहो भवति। पूर्वपदाध्याहारश्च कर्तव्यो न भवति। अत एव क्षेत्रराज आह—

## बालक्रीड़ा

अर्थात चार लघु वाला गण हो सकता है। इस पर भी यदि षष्ठ गण चार लघु वाला होगा तो वहां द्वितीय लघु से पूर्व प्रथम लघु पर यति होगी वही

## सेतुः

रामामय नमः । एवमार्य्यायाः पूर्वार्द्धं लक्षयित्वा द्वितीयेन पद्येन सयतिनियममुत्तरार्द्धलक्षणं चाह षष्ठ इति । अत्र प्रथमे इत्यनुवर्तते पष्ठस्थाने न्ले नगणयुक्ते लघौ चतुर्लघाविति यावत् । कृते सति चतुर्लघुसम्बन्धी यो द्वितीयो लघुस्तस्मात् प्रथमें पूर्वस्मिन्प्रथमललो सयति सविच्छेदस्पदस्य नियमस्समाप्तिः । परके इति सप्तमस्थाने न्ले सति मुखलादादिलघोः प्रथमे षष्ठगणान्ते सविच्छेदः पदसमाप्तिरित्यर्थः । यथात्रैव षष्ठे द्वितीयलात्परके न्ले मुखलाच्चेत्यत्र षष्ठ चतुर्लघु प्रयुक्ता यतिः ।

## नारायणी

षष्ठो द्वितीयमादाय लमेवारभ्यते पदम् ।
सप्तमे न्ले पुनर्मुख्यं पूर्वार्धेऽसौ यतिः स्मृता ।।
पदमारभ्यते नित्यं गृहीत्वा प्रथमं लघु ।
पञ्चमे न्ले बुधैरेवं चरमार्धे स्मृता यतिः ।। इति ।

छन्दोमाणिक्यं त्वार्थसूत्रार्थकथनेनापि सङ्गच्छते । अत्र यतिमात्रे नियते सति चामीकरादिवत्पूर्वापरभागयोरनेकाक्षरत्वे पदमध्ये यतिर्मा भूदिति पदस्याऽपि नियम उक्तः । तत्र स्पष्टास्पष्टविभक्तिकत्वयोर्न विशेषः । अत्र प्रथमाऽर्या षष्ठजगणपक्षे सामान्यलक्षणोदाहरणम् । षष्ठस्य चतुर्लघुत्वे पूर्वार्धद्विविधयतौ च द्वितीयाऽऽर्यापूर्वार्धमुदाहरणम् । उत्तरार्धयतेस्तल्लक्षणस्य तदुत्तरार्धमिति विवेकः । अत्र विषमे जगणनिषेधात्प्रत्येकं चत्वारो विकल्पाः । यथा—

१ २ ३ ४
SS, IIS, SII, IIII, इति । समस्थाने तु जगणस्याऽनिषेधात्प्रत्येकं पञ्च ।

## बालक्रीड़ा

एक पद भी होगा और यदि सप्तम गण न और लघु माने चार लघुवाला गण होगा तो प्रथम लघु से पूर्व माने षष्ठ गण के अन्त में पद और यति का नियम होगा । यह लक्षण पूर्वार्ध में हुआ । उत्तरार्द्ध में पूर्वार्द्ध

## सेतुः

च्चेत्यत्र षष्ठे चतुर्लघुप्रयुक्ता यतिः। सयतीत्यत्र तु सप्तमे नलघुप्रयुक्ता अथोत्तरार्द्धे यतिनियममाह चरम इति। अन्तिमेऽर्द्धे पंचमस्थाने न्ले सति तस्य प्रथमनलघोः पूर्वस्मिन्नुतुर्गणस्यान्ते यतिः यथा चरमेऽर्द्धे पंचमके तस्मादित्यस्यान्ते। अथोत्तरार्द्धलक्षणमाह इह भवतीति आर्योत्तरार्द्धे षष्टगणस्थानापन्न एको लघुरेव देयो न तु चतुर्मात्रो गणः। शेषं पूर्वार्द्धवत् ' एवं हि पंचगणानां विंशतिमात्राः षष्टगणस्थानीयलघोरेका सप्तमगणस्य चतस्रः अष्टमस्थानीयगुरोर्द्वे संयोजनात्सप्तविंशतिमात्रावैशिष्ट्यमार्योत्तराद्धलक्षणं पर्यवसन्नमस्ति चेदं चरम इत्याद्युत्तरार्द्धे षष्ठोऽयमित्यादि पूर्वपद्योत्तरार्द्ध चेति स्वयं संगमनीयमेतदार्यादिवृत्तेषु भूयांसः सन्ति यद्यपि तथाप्यनुपयुक्तत्वान्न किल ब्रुवन्ति तानिह ॥२॥

## नारायणी

१ २ ३ ४ ५

यथा—SS, IIS, ISI, SII, II II, इति। ततश्च पूर्वार्धे प्रथमे भेदाः ४, द्वितीये ५, तृतीय ४, चतुर्थे ५, पञ्चमे ४, षष्ठे २ जन्लयोरेव विकल्पनात्। सप्तमे ४, अष्टमे गुरुरेकः। एतेषामन्योन्यगुणने द्वादश सहस्राणि, अष्टौ शतानि पूर्वार्धभेदाः। उत्तरार्धे तु षष्ठे लघुनियमनात्तदतिरिक्तं सर्वं पूर्ववदेव। तथा चान्योन्यगुणने षट्सहस्राणि चत्वारिंशतानि भेदा उत्तरार्धे। उभयविकल्पानां परस्परगुणनेऽष्टौ कोटय एकोनविंशतिर्लक्षाणि विंशतिः सहस्राणि। इयमार्याणां भेदसङ्ख्या। अङ्कतोऽपि ८१९२०००० । तदुक्तम्—

जगणविहीना विषमे चत्वारः, पञ्च युजि, चतुर्मात्राः।
षष्ठे द्वाविति च गणास्तथाङ्कतः प्रथमदलसङ्ख्या॥
एवमपरार्धसङ्ख्या षष्ठे स्याल्लघुनि चैकस्मिन्।
आर्यासङ्ख्योभयदलसङ्ख्याघाताद्विनिर्दिष्टा॥ इति ॥ २ ॥

## बालक्रीड़ा

की तरह सब स्थिति होगी केवल यदि पंचम गण नगण और लघु होगा तो प्रथम लघु से पूर्व चतुर्थ गण के अन्तःपद समाप्त होकर यति होती है। इसमें छठा गण एक लघुवाला होता है ॥१।२॥

## नारायणी

अत्रैव प्रसङ्गादार्यासु नष्टोद्दिष्टे उच्येते—

लोके प्रसिद्धनामा सीमा विद्याविनोदविभवानाम् ।
जयतीह शुद्धचरितो रामेशाख्यो गुरुः काश्याम् ॥

यदा कश्चिज्जिज्ञासेतेयमार्या कतिथेति, तदास्या गणान्स्थापयेत् । गणाधश्चतुः पञ्चादिकं सङ्ख्याविकल्पं यथासङ्ख्यं स्थापयेत् । तत उपान्त्यमन्त्येन हत्वेष्टाद्विकल्पादधस्तनाञ्शेषान्विकल्पसङ्ख्यापूरकान्विकल्पानपनीय शेषया सङ्ख्यया तदाद्यं गणविकल्पाङ्कं हत्वा इष्टविकल्पाधस्तनविकल्पान् राशेरपनीय शेषाङ्कं पूर्वपूर्वेण गुणयित्वेष्टविकल्पाधस्तनविकल्पाङ्कं पातयेत् । एवं यावदाद्यगणं कुर्यात् । शेषसङ्ख्ययाऽऽर्यासङ्ख्यां जानीयात् । अत्र सर्वगुर्वन्तगुरुमध्यगुर्वादिगुरुसर्वलघुक्रमेणावावस्थानेऽधस्तनत्वं ज्ञेयम् । अत्र न्यासः—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ गु० |
|---|---|---|---|---|---|---|---|
| लोके | प्रसिद्ध- | नामा | सीमा | विद्या- | विनोद- | विभवा- | नाम् ॥ |
| ऽ ऽ, | । ऽ ।, | ऽ ऽ, | ऽ ऽ, | ऽ ऽ, | । ऽ ।, | । । ऽ, | ऽ, |
| ४ | ५ | ४ | ५ | ४ | २ | ४ | १ |

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ गु- |
|---|---|---|---|---|---|---|---|
| जयती- | ह शुद्ध- | चरितो | रामे- | शाख्यो | गु- | रुः का- | श्याम् ॥ |
| । । ऽ, | । ऽ ।, | । । ऽ, | ऽ ऽ, | ऽ ऽ, | ।, | ऽ ऽ, | ऽ, |
| ४ | ५ | ४ | ५ | ४ | १ | ४ | १ |

नारायणी

अत्रान्ते न्यस्तस्याऽर्धगणस्य विकल्पाभावादधस्तनाङ्कस्य द्वितीयाऽर्धे सप्तमाधस्तनैश्चतुर्भिर्गुणने जाताश्चत्वारः। सप्तमस्येष्टस्य सर्वगुरुत्वात्तस्याधस्तनान् ज (।ऽ।) गणव्यतिरिक्तानन्तगुर्वादिगुरुसर्वलघूंस्त्रींश्चतुर्षु पातयेत्। शेष एकः। षष्ठस्य लघुमात्ररूपत्वाद्विकल्पाऽभावः। पञ्चमाधस्थचतुर्भिरेकगुणने तत्राऽपि पूर्ववत्त्रयाणां त्यागे शेषस्यैकस्य चतुर्थाधस्थपञ्चभिर्हतौ चतुर्षु पातितेषु शेषस्यैकस्य तृतीयाधस्थैश्चतुर्भिर्हतौ शेषयोर्द्वयोस्त्यागे शेषद्वयस्य द्वितीयस्थैः पञ्चभिर्हतौ द्वये त्यक्ते शेषा अष्टौ। तेषां प्रथमस्थैश्चतुर्भिर्हतौ जगणातिरिक्ते द्वये त्यक्ते त्रिंशत्। एवमुत्तरार्धम्। पूर्वार्धान्त्यगणार्धं त्वविकल्पम्। सप्तमस्थैश्चतुर्भिस्त्रिंशतो द्वये पातिते शतमष्टादशाधिकम्। तस्य षष्ठस्थाभ्यां द्वाभ्यां हतौ एकस्य त्यागे पञ्चत्रिंशदधिकं शतद्वयं शिष्टम्। तस्य पञ्चमस्थैश्चतुर्भिर्हतौ त्रिषु पातितेषु शिष्टा सप्तत्रिंशदधिका नवशती। तस्यां चतुर्थस्थैः पञ्चभिर्हतायां चतुर्णां त्यागे एकाशीत्यधिकानि षट्चत्वारिंशच्छतानि। तेषु तृतीयस्थैश्चतुर्भिर्हतेषु त्रिषु पातितेषु अष्टादशसहस्त्राणि एकविंशत्यधिकानि सप्तशतानि च। तेषां द्वितीयस्थैः पञ्चभिर्हतौ द्वयोरपाये सहस्त्राणां त्रिनवतिस्त्र्यधिकाषट्शती च। तस्यां प्रथमस्थैश्चतुर्भिर्हतायां त्रयाणांत्यागे सिद्धोऽङ्को लक्षत्रय चतुःसप्ततिः सहस्त्राणां नवाधिकानि चत्वारि शतानि च। अङ्कतोऽपि ३७४४०९। एतावत्सङ्ख्येयं पूर्वोक्ताऽऽर्या भवति। तदुक्तम्—

गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत्।
चतुःपञ्चादिकां सङ्ख्यां स्थानस्थानोचितां ततः॥
हत्वा हत्वाद्यमन्त्येन चोपरिस्थगणादधः।
पृथग्घातगणेभ्योऽऽथ गणसङ्ख्यां विकल्पयेत्॥
हताद्यार्योचिता तावद्यावदाद्याङ्कसम्भवः।
तत्सङ्ख्यामुद्दिशेद् गाथामुद्दिष्टप्रत्यये बुधः॥ इति

इत्यार्योद्दिष्टविधिः॥

अथ नष्टम्। यथा लक्षत्रयं चतुःसप्ततिसहस्त्राणि चत्वारि शतानि

## नारायणी

नव चेत्येतत्सङ्ख्याऽऽर्या कीदृगिति जिज्ञासा, तदा नष्टाङ्कं लिखित्वा ग्रादिभूतगणविकल्पैर्भागं हरेत्। भागे हृते योऽङ्कः शिष्टस्तत्सम्मितं तद्गणविकल्पेषु गणं लिखेत्। भागहारे यल्लब्धं तत्सैकं कृत्वा पुनः पुनरुत्तरगणविकल्पैर्भागे हृते भाज्यशेषसङ्ख्याको गणस्तत्तद्गणविकल्पेषु पूर्वस्थापितगणानन्तरं स्थाप्यः। इत्येवं यावत्पूर्ति कार्यम्। यत्र तु गणविकल्प एव शिष्यते, तत्र तत्सङ्ख्य एव गणो ग्राह्यः। परं लब्धं सैकं न कार्यम्। शिष्टं पूर्ववत्। तद्यथा-प्रथमगणस्य चतुर्विकल्पत्वाच्चतुर्भिः पूर्वोक्ते नष्टाङ्के हृते लब्धं त्रिनवतिसहस्राणि द्व्यधिकानि च शेष एकाङ्क इति। प्रथमगणस्य पञ्चविकल्पत्वात्तैर्भक्ते लब्धं सहस्राण्यष्टादश त्रिंशदधिकसप्तशती च शेषास्त्रय इति। तद्विकल्पेषु तृतीयो मध्यगुरुः स्थाप्यः। लब्धे सैके तृतीयस्य चतुर्विकल्पत्वात्तैर्भक्ते लब्धमशीत्यधिकषट्चत्वारिंशच्छती शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः कार्यः। लब्धे सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं नवशती षट्त्रिंशदधिका शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः स्थाप्यः। लब्धे सैके पञ्चमस्य चत्वारो विकल्पा इति तैर्भक्ते लब्धं चतुस्त्रिंशदधिकं शतद्वयं शेष एक इति। तद्विकल्पेषु सर्वगुरुः स्थाप्यः। लब्धे सैके षष्ठस्य जगणन्लयोरेव विकल्पाद् द्वाभ्यां भक्ते लब्धं सप्ताधिकं शतं शेष एक इति। तद्विकल्पयोराद्यो मध्यगुरुः स्थाप्यः। लब्धे सैके सप्तमस्य चत्वारो विकल्पा इति, इति तैर्भक्ते लब्धं एकोनत्रिंशत् शेषं द्वयमिति। तद्विकल्पेषु द्वितीयोऽन्तगुरुः। ततः सर्वार्याभिमत गुरुं न्यसेत्। एवं पूर्वार्धं स्थितम्। ततो लब्धे सैके आर्योत्तरार्धादिगणश्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं सप्त शेषं द्वयमिति। द्वितीयविकल्पोऽन्तगुरुः। लब्धे सैके द्वितीयस्य पञ्च विकल्पा इति तैर्भक्ते लब्ध एकः शेष त्रय इति। तृतीयविकल्पो मध्यगुरुः। लब्धे सैके तृतीयश्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं शून्यं शेषं द्व इति। द्वितीयविकल्पोऽन्तगुरुः। लब्धे शून्ये सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं शून्यं शेष एक इति। प्रथमविकल्पः सर्वगुरुः। लब्धे सैके पञ्चमश्चतुर्विकल्प इति तैर्भक्ते लब्धं शून्यमत्रशेष एक इति। प्रथमः सर्व-

**त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।**
**पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥३॥**

सेतुः

श्रीशो जयति श्रीः ॥

इत्यार्यालक्षणम् । अथ पथ्यार्यालक्षणमाह-त्रिष्विति । यस्या द्वयोरप्य-र्द्धयोस्त्रिष्वंशकेषु चतुर्मात्रागणेषु पादो विरामो दृश्यते सा पथ्येति । केवलं यतिकृतमार्यातोऽस्या वैशिष्ट्यम् ॥३॥

नारायणी

गुरुः । अन्त एको गुरुर्लेख्यो नियतत्वात् । एवं सत्येनाऽऽङ्गीयमिति पूर्वोक्ता-मेवार्यां वदेत् । तदुक्तम्---

नष्टाङ्के प्रथमे भक्ते गणाङ्कैश्चतुरादिकैः ।
शेषसङ्ख्यो गणो ज्ञेयो लब्धकुर्यात्सरूपकम् ॥
पुनर्भजेत्पुनर्लब्धं सरूपं शेषसङ्ख्यया ।
गणान्दद्याद् गते शेषे गाथायाः प्राग्गणक्रमः ॥ इति ।

एवमार्यान्तरेषु गीत्यादिषु च ज्ञेयम् । इत्यार्यानष्टविधिः ॥

अथ कांश्चिदार्याविशेषानाह---

आद्येषु त्रिष्वंशकेषु त्रिषु गणेषु यस्या दलयोरर्धयोः पादो दृश्यते कवि-प्रयोगेषु तस्या आर्याया नागश्रेष्ठेन पिङ्गलेन पथ्येति नाम प्रकीर्तितमुक्तम् । 'त्रिषु गणेषु पादः पथ्याद्ये च' ( पि. सू. ४-२२ ) इति सूत्रे इत्यर्थः । सर्वत्रात्र ऋषिनामनिर्देशः समूलताप्रदर्शनार्थः, न त्वन्यमतत्वप्रदर्शनार्थः । इदमेवात्रोदाहरणम् । एवमुत्तरत्राऽपि । ३॥

बालक्रीडा

जिस आर्या के दोनों दलों माने पूर्वार्द्ध और उत्तरार्द्ध में प्रथम तीन गणों के अन्त में पाद दिखाई पड़ता हो तो छन्दःशास्त्र के जानकारों ने उसका नाम पथ्या कहा है ॥३॥

**संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।**
**यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥४॥**

सेतुः

अथ विपुलालक्षणमाह — उलंघ्य गणत्रयमिति । गणत्रयमुल्लंघ्य पादः विरामः । एवमुत्तरार्द्धेऽप्यवसेयं विपुला इति प्रसिद्धा ॥४॥

नारायणी

यस्या—आर्याया आद्यं गणत्रयं लङ्घयित्वा परतो यत्र क्वचिद् द्वयोः शकलयोरर्धयोर्व्यस्तयोः समस्तयोर्वा पादयोर्यतिः स्यात्, तामार्यामित्येवं प्रकारतया पिङ्गलनागो विपुलां समाख्याति कथयति । 'विपुलान्या' ( पिं. सू. ४–२३ ) इति सूत्रे इतिशब्दं प्रकारवचनमङ्गीकृत्य व्याख्येयम् । तेन इतिनाऽनुक्तत्वाद्विपुलामिति कर्मणि द्वितीयाया न विरोधः । प्रकारवाचिनेतिशब्देन चपलादीनामपि गणत्रयानन्तरविरामत्वप्रकारे सति विपुलात्वमपि भवतीति सङ्कीर्णभेदा अपि सङ्गृहीताः । एवं चत्रिविधा । पूर्वार्धे एव त्रिगणानन्तरविरामा मुखविपुला, उत्तरार्धे एव तादृग्जघनविपुला, उभयोरर्धयोस्तादृगुभयविपुलेति । इयमेव महाविपुलापि । अत्र 'षष्ठे' ( वृ. २–२ ) इत्यादिर्मूलस्याद्या । द्वितीया ममैव यथा —

करुणाविषये करुणां करुणावरुणालयाशु मयि धेहि ।
राघव ! करुणाशीलवतां विषमा न मनसो वृत्तिः ॥

तृतीया मूलस्यैव ॥४॥

बालक्रीड़ा

जिस आर्या के पूर्वार्द्ध और उत्तरार्द्ध में प्रथम तीन गणों को उल्लंघन कर के यानी तीन गणों के अन्त में यति हो तो है तो उसे पिङ्गल नाग विपुला कहते हैं ॥४॥

**उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।**
**चापलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥५॥**
**आद्यं दलं समस्तं भजेत लक्ष्म चापलागतं यस्याः ।**

## सेतुः

अथ चपलालक्षणमाह उभयेति । गुरुमध्यगतो जगणो यस्या द्वयोरप्यर्द्धयो द्वितीयचतुर्थौ स्यातां सा चपला आर्या । यस्याः पूर्वार्द्धयोर्ज इति द्वितीयो जगणः । चतुर्थोपि । जगणः । नागराजेन प्रकीर्तितम् ॥५॥

अथ मुखचपलालक्षणमाह—आद्यमिति । यस्या आद्यमर्द्धं चपलालक्षण

## नारायणी

यस्यां द्वयोरर्धयोर्व्यस्तयोः समस्तयोर्वा द्वितीयचतुर्थौ गणौ पश्चात्पुरः स्थित-गुरुमध्यगतौ जगणौ स्याताम् साऽऽर्या चपला । एतदुक्तं भवति प्रथमो गणो द्विगुरुरन्त्यगुरुर्वा, तृतीयो द्विगुरुः, पञ्चमो द्विगुरुरादिगुरुर्वा, द्वितीयचतुर्थौ मध्यगुरू इति नियतमस्यामिति । अत्राद्याध प्रममे द्वौ विकल्पौ ( ऽऽ, ।ऽ ), द्वितीय एकः ( ।ऽ। ), तृतीयेऽप्येकः ( ऽऽ ), चतुर्थेऽप्येकः ( ।ऽ। ), पञ्चमे द्वौ ( ऽऽ, ऽ।। ), षष्ठे द्वौ ( ।ऽ।, ।।।। ), सप्तमे चत्वारः ( ऽऽ, ।।ऽ, ऽ।।, ।।।। ), अष्टमे गुरुरेव । अन्योन्यगुणने द्वात्रिंशत् । उत्तरार्वे षष्ठस्य लघुमात्रत्वात्षोडश । उभयार्धविकल्पानामन्योन्यगुणने द्वादशाऽधिका पञ्चशती विकल्पानाम् अङ्कतोऽपि ५१२ ॥ ५ ॥

मुखचिपलादीनां सूत्रकारानुक्तत्वात्स्वयं स्फुटतया लक्षणाऽनुक्तावपि चपलाभेदौ सूत्रोक्तत्वाल्लक्षयति—

## बालक्रीड़ा

जिस आर्या के दोनों अद्र्धों में यानी पूर्वाद्र्ध और उत्तराद्र्ध में द्वितीय और चतुर्थ गण जगण हो और वह जगण दो गुरुओं के मध्य में हो यानी उस जगण के दोनों तरफ पहले भी और बाद में भी गुरु हों तो नागराजने उसका नाम चपला कहा है ॥५॥

जिस आर्या का समस्त आद्यदल यानी पूर्वाद्र्ध पूर्णरूप से चपला

## सेतुः

षष्ठोऽयं न लघ्वेवेतिपक्षयोरन्यतरपक्षेऽपीत्यर्थः । यत्तु सुधायां षष्ठजगण चतुर्लघुगणान्यतमप्रकारेणेतिव्याख्यातन्तदशुद्धं षष्ठे जगणचतुर्लघुरूपयोर्द्व योरेवैकस्य निर्धारणीयत्वात् । अन्यतमशब्दो हि बहुविषयकनिर्धारणे

## नारायणी

श्रयणेनाऽपि भवेत् तदा कृतयतिशोभां कृता यत्या विच्छेदात्मिकया शोभा श्रुतिसौभाग्यं यस्यास्ताम् । एतेनार्योक्तो यस्तत्तद्गणविशेषे सति विरामविशेषः सोऽप्यस्यां भवतीति दर्शितम् । भुजङ्गेशः पिङ्गलस्तां गीतिं गीतवानुक्तवान् । "आद्यार्धसमा गीतिः" (पि.सू. ४–२८) इति सूत्रेणेत्यर्थः। ततश्चात्र द्वितीयार्धेऽपि पूर्णाः सगुरवः सप्त गणाः । न तु षष्ठे लघुमात्रमित्यादि ज्ञेयम् । इयमेका पथ्या, तिस्रो विपुलाः, द्वादश चपलाः । एतत्पूर्वोक्तत्वात्षोडशधा । तत्र पथ्यागीतिमूले । अन्याः स्वयमुदाहार्याः । अत्राद्यार्धमार्यावत् । द्वादश सहस्राण्यष्टौ शतानि च विकल्पाः । उत्तरार्धेऽपि तावन्त एव । परस्परहतौ कोटयः षोडशाऽष्टत्रिंशल्लक्षाश्चत्वारिंशत्सहस्राणि च विकल्पाः । अङ्कतोऽपि १६३८०००० ।

## बालक्रीड़ा

पथ्या आर्या
मुखविपुला आर्या
जघनविपुला आर्या
उभयविपुला आर्या
मुखचपला पथ्या आर्या
मुखचपला मुखविपुला आर्या
मुखचपला जघनविपुला आर्या
मुखचपला उभयविपुला आर्या

जघनचपला पथ्या आर्या
जघनचपला मुखविपुला आर्या
जघनचपला मुखविपुला आर्या
जघनचपला जघनविपुला आर्या
जघनचपला उभयविपुला आर्या
महाचपला पथ्यार्या
जघनचपला मुखविपुला आर्या
महाचपला आर्या
महाचपला उभयविपुला आर्या

**दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजंगेशः ॥८॥**

सेतुः

प्रयुज्यते । यदुक्तं पस्पशायाम् अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषयनिर्धारणे वर्तेते इति ॥८॥

नारायणी

पथ्यागीत्यादिषु चतुर्षु भेदेष्वियं सञ्ज्ञया ज्ञेया । द्वादशसु चपलागीतिषु पूर्वापरार्धविकल्पघाते सञ्ज्ञया स्वयमूह्या ॥८॥

बालक्रीड़ा

अब गीति प्रकरण को कहते हैं ।

आर्या के प्रथम दल में माने पूर्वार्द्ध में कहा हुआ लक्षण यदि जहाँ दोनों में माने पूर्वार्द्ध और उत्तरार्द्ध में किसी प्रकार हो जाय और उसी तरह यति की शोभा बनी रहे तो भुजङ्गेशने उसे गीति कहा है ॥८॥

गीती के भेदों के नाम —

गीतिपथ्यार्या
गीतिजघन विपुलार्या
मुखचपला गीति पथ्यार्या
मुखचपलागीतिजघन विपुलार्या
जघनचपलागीतिपथ्यार्या
जघनचपला गीतिजघनविपुलार्या
महाचपला गीतिपथ्यार्या
महाचपला गीतिजघनविपुलार्या
गीतिमुख विपुलार्या
गीत्युभय विपुलार्या
मुखचपला गीतिविमुखविपुलार्या
मुखचपला गीत्युभयविपुलार्या
जघनचपला गीतिमुखविपुलार्या
जघनचपला गीत्युभयविपुलार्या
महाचपला गीतिमुखविपुलार्या
महाचपला गीत्युभयविपुलार्या

आर्या द्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥९॥

सेतुः

अथोपगीतिः। आर्याद्वितीयेति। इह भवति षष्ठो ल इत्यार्योत्तरार्द्ध लक्षणं पादयोर्द्वयोः स्यात् सोपगीतिः ॥९॥

नारायणी

अत्रापि तदेति शेषः। यद्यार्याद्वितीयार्धे यदुक्तं लक्षणं षष्ठलध्वादि, तदुभयोरर्धयोः स्यात्। तदोपगीतिं पिङ्गलः 'अन्त्येनोपगीतिः' (पिं० सू० ४-१९) इत्यत्राहेत्यर्थः। अस्यां पूर्वार्धे षट्सहस्राणि चत्वारि शतानि विकल्पाः। उत्तरार्धेऽपि तावन्त एव। अन्योन्यघाते चतस्रः कोट्यो नव लक्षाः षष्टिः सहस्राणां विकल्पाः। अङ्कतोऽपि ४०९६०००० ॥९॥

बालक्रीड़ा

आर्या के उत्तरार्द्ध में जो लक्षण कहा गया हैं वही लक्षण यदि जिसके उभयदलो में माने पूर्वार्द्ध में और उतरार्द्ध में भी हो जाय तो मुनि उसे उपगीति कहते हैं ॥९॥

उपगीति के भेदों के नाम।

उपगीतिपथ्यार्या।
उपगीतिजघनविपुलार्या।
मुखचपलोपगीतिपथ्यर्या।
मुखचपलोपगीतिजघनविपुलर्ा।
जघनचपलोपगीतिपथ्यार्या।
जघनचपलोपगीतिजघनविपुलार्या।
महाचपलोपगीतिपथ्यार्या।
महाचपलोपगीतिजघनविपुलार्या।
उपगीतिमुखविपुलार्या।
उपगीत्युभयविपुलार्या।
मुखचपलोपगीतिमुखविपुलार्या
मुखचपलोपगीत्युभयविपुलार्या।
जघनचपलोपगीयिमुखविपुलार्या।
जघनचपलोपगीत्युभयविपुलार्या
महाचपलोपगीतिमुखविपुलार्या।
महाचपलोपगीत्युभयविपुलार्या।

**आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याम् ।**
**सोद्गीतिः किल कथिता तद्वद्यत्यंशभेदसंयुक्ता ॥१०॥**

## सेतुः

अथोद्गीतिः । आर्याशकलद्वितयमिति । यस्या द्वितीयमर्द्धं पूर्वार्द्धलक्षणकं पूर्वार्द्धन्तूत्तरार्द्धलक्षणकमिति व्यत्ययेन रचितं सोद्गीतिः । तद्वदिति पथ्यार्यावदिति भावः । यत्यंशेति त्रिष्वंशकेष्वित्याद्युक्तं तत् सयुक्तेत्यर्थः ॥१०॥

## नारायणी

आयार्धद्वयं यस्या व्यत्ययेन विपर्यासेन यत्पूर्वार्धं तदुत्तरार्धम् यदुत्तरार्धं तच्च पूर्वार्धमित्येवंरूपेण रचितम्, सा किलेति प्रसिद्धा । उद्गीतिरुक्ता । तेनैव तद्वदिति पथ्याद्यार्याभेदवदेव यत्या विरामेण योंऽशभेदः पादभेदस्तेन युक्तेत्यर्थः । अत्रार्यावद्विकल्पसङ्ख्या । यथा —८१९२०००० ॥१०॥

## बालक्रीड़ा

आर्या के दोनों शकल माने पूर्वार्द्ध और उत्तरार्द्ध दोनों खण्ड यदि जिसमें व्यत्यय से रचित हों अर्थात् आर्या के पूर्वार्द्ध का लक्षण उत्तरार्द्ध में रहे और उत्तरार्द्ध का लक्षण पूर्वार्द्ध में रहे इस तरह व्यत्यय माने उलटा हो जाय किन्तु पद और यति को शोभा उसी तरह बनी रहे तब उसे उद्गीति कहा है ॥१०॥

उद्गीति के भेदों के नाम —

उद्गीतिपथ्यार्या ।
उद्गीतिमुखविपुलार्या ।
उद्गीतिजघनविपुलार्या ।
उद्गीत्बुमयविपुलार्या ।
मुखचपलोद्गीतिपथ्यार्या ।
मुखचपलोद्गीतिमुखविपुलार्या
मुखचपलोद्गीत्युभयविपुलार्या
जघनचपलोद्गीतिपथ्यार्या
जघनचपलोद्गीतिमुखविपुलार्या
जघनचपलोद्गीतिजघनविपुलार्या
जघनचपलोद्गीत्युभयविपुलार्या
महाचपलोद्गीतिजघनविपुलार्या
महाचपलोद्गीतिमुखविपुलार्या
महातपलोद्गीतिजघनविपुलार्या ।
महाचपलोद्गीत्युभयविपुलार्या ।

## अर्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।

### सेतुः

अथार्यागीतिः । आर्यापूर्वार्द्धमिति । त्रिंशन्मात्रात्मकं पूर्वार्द्धं निधने अन्ते एकेन गुरुणा युक्तं द्वात्रिंशन्मात्राविशिष्टं पूर्वार्द्धमिति यावत यदीयं स्यात् । उत्तरार्द्धमपि निखिलं तद्वद् द्वात्रिंशन्मात्राविशिष्टमित्यर्थः ।

### नारायणी

आर्यापूर्वार्धं यद्येकेनाधिकेन गुरुणा निधने अन्ते युक्तं स्यात् । इतरच्च द्वितीयं समस्तं यदीयमर्धं तद्वत्पूर्वार्धवदियमार्यागीतिरिति मुनिनोक्ता । आर्यायां हि पूर्वार्धे सगुरुकाः सप्त गणाः । इह तु पूर्णा अष्टौ गणा अर्धद्वियेऽपि भवन्ति । अन्तिमस्तु गणो द्विगुरुरेव । अन्यत्सर्वमार्यापूर्वार्धतुल्यमेवेति भावः । अत्रार्यापूर्वार्धविकल्पानामष्टमगणो विकल्पाभावात् परस्परताडने जाताऽङ्को द्वादशसहस्राण्यष्टौ शतानि च पूर्वार्धे उत्तरार्धेऽपि तावदेव । अन्योन्यहतो जाता मुख्यगीतिवद् भेदसङ्ख्या । अङ्कतोऽपि १६३८४००००।

केचित्तत्रोत्तरार्धेऽर्धशब्दमपठित्वा इतरदार्याया एवोत्तरार्धं तद्वदन्तेऽधिकैकगुरुयुक्तं स्यात्साऽऽर्यागीतिरिति । आर्यापूर्वार्धमित्यत्र समस्तमप्यार्याशब्दं षष्ठयन्तं समासान्निष्कृष्टमनुषज्य पूर्वार्धस्याष्टगणत्वेन 'द्वात्रिंशन्मात्रताम्' उत्तरार्धस्यैकोनत्रिंशन्मात्रतां चाभिप्रेत्य व्याचक्षते । भवतु नामैतद्व्याख्याकौशलम्, किं तु बहूनामसम्मतम्, सूत्राननुगुणं च 'अर्धे वसुगण आर्यागीतिः' (पि० सू० ४-६१) इति हि सामान्यतोऽर्धे वसुगणेऽष्टगणे सतीति । यद्वा द्वे अप्यर्धे यद्यष्टगणे स्यातामिति सूत्रकार आह । कैश्चिदियं सङ्गीतिरिति संज्ञिता । अपरैः स्कन्धकमिति । गीतीनामप्यार्यापूर्वकत्वादार्यात्वमस्त्येव । एताश्चतस्रोऽपि गीतयः प्रत्येकं पथ्यादिपूर्वोक्तषोडशप्रकारासम्भिन्नतया

### बालक्रीड़ा

आर्या का पूर्वार्द्ध यदि अन्त में एक अधिक गुरु से युक्त हो जाय यानी आर्या में सात गणों के बाद एक गुरु रहता है वहां ही यदि एक गुरु

## सेतुः

सार्यागीतिः । तथाचोक्तं सूत्रकारेण अप्रगृह्यत्वात् प्रकृतिभावाप्राप्त्याऽयादेशाद्यापत्तिः । तस्मादेतत्सूत्रमित्थं वृत्तिकृता व्याख्यातम्; आद्ये द्वे

## नारायणी

षोडशेति मिलिताश्चतुः षष्टिः । पूर्वाश्च षोडशार्या इति मिलित्वाऽशीतिः । तदुक्तं हलायुधेन—

एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ।
साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः ॥ इति ।

छन्दोविवितौ त्वेकादशाऽपरे गीतिभेदाः प्रदर्शिताः । ते यथा, आर्यैवदलद्वयेऽप्यधिकैकगुरुयुता सङ्गीतिः । ममैव यथा—

आगमविद्यैकनिधिविबुधेन्द्रशतैरधीतनिगमविलासः ।
रामेश्वरभट्टगुरुर्जयति पिता मे पितामहतुल्यः ॥ (१)

पूर्वार्धं एवाधिकैकगुरुयुक् सुगीतिर्नाम । पितामहगुरुरिति पठित्वा पूर्वमेवोदाहरणम् (२) यद्युत्तरार्ध एव तादृक्तदा प्रगीतिर्नाम । 'अधीतनिगमार्थः' इति पठित्वा प्रथममेवोदाहार्यम् (३) सुगीतिरेव व्यत्यस्तार्धा मञ्जुगीतिः । सुगीत्युदाहरणमेव व्यस्तार्धं ज्ञेयम् (४) । प्रगीतिरेव व्यत्यस्तार्धं मञ्जुगीतिः । प्रगीत्युदाहरणं व्यत्यस्तार्धमत्रोदाहरणम् (५) । यद्युपगीतिरर्धद्वयेऽप्यधिकैकगुरुयुक् स्यात्तदा विगीतिः । ममैव यथा—

विषयान्विषधरविषमान्संस्तुतिमपि नीरसां ज्ञातवतः ।
संसारसारभूते दशरथबाले मतिः स्थैर्यमीयात् ॥ (६)

## बालक्रीड़ा

और बढा कर दो गुरु कर दिये जांय जिसके फल स्वरूप वहां दो मात्रा के बजाय चार मात्राएं हों जायं बाकी सब जैसा का तैसा रहे वही रहे तो उसे

इतरराद्धन्निखिलं दलं यदीयमुदितेयमार्या गीतिः ॥११॥

सेतुः

द्वितीये चाष्टगणे सत्यार्यागीतिः । एतेन पूर्वार्द्धे द्वात्रिंशत्मात्रा उत्तरार्द्धे

नारायणो

यद्युद्गीतिद्वयोरप्यर्धद्वयेऽप्यधिकगुरुयुक्ता तदा चारुगीतिः । अत्र पूर्वोक्तं सङ्गीत्युदाहरणमेव विपर्यस्तार्धं ज्ञेयम् (७) । आर्यागीतेरेवैकगुरुहीनोत्तरार्धं तायां वलनरीत्वम् । ममैव यथा—

पीनोन्नतकुचकलशा पीवरजघनोरुभारमन्थरयाता ।
पश्यन्ती प्रणयदृशा तरुणी कं वा न चालयेत्पुरुषम् ॥ (८)

तस्या एव पूर्वार्धे एव तथात्वे ललितेतिसंज्ञा अर्थयोर्व्यत्यासेनाऽनन्तरमेवोदाहरणम् (९) उपगीतिरेवाद्यार्धेऽधिकैकगुरुयुता प्रमदा नाम । ममैव यथा—

यस्य विलासवतीनां केलिकलाकौशले रतिविरतिः ।
मैथुनमात्ररसज्ञः शृङ्गविहीनः पुमान्स पशुः ॥ (१०)

बालक्रीड़ा

आर्या गीति कहते हैं ॥११॥

आर्या गीति के भेदों के नाम—

आर्यागीतेः षोडशभेदानां नामानि यथा—

आर्यागीतिपथ्यार्या ।
आर्यागीतिमुखविपुलार्या ।
आर्यागीतिजघनविपुलार्या ।
आर्यागीत्युभयविपुलार्या ।
मुखचपलार्यागीतिपथ्यार्या ।
मुखचपलार्यागीतिमुखविपुलार्या
मुखचपलार्यागीतिजघनविपुलार्या
मुखचपलार्यागीत्युभयविपुलार्या ।
जघनचपलार्यागीतिपथ्यार्या
जघनचपलार्यागीतिजघनविपुलार्या

## इति गीतिप्रकरणम् । अथवैतालीयंप्रकरणम् ।

## षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरंतराः ।

### सेतुः

त्वेकोनत्रिंशन्मात्रा भवन्ति सार्यागीतिरिति मन्यमानाः सुल्लक्षणादयो निराकृताः ।।११।।

इति गीतिप्रकरणम् । अथ वैतालीयप्रकरणम् ।

षड्विषमे इति । वैतालीये छन्दसि विषमे पादे प्रथमतृतीयरूपे षट् कलाः

### नारायणी

सैवोत्तरार्धेऽधिकैकगुरुयुता चन्द्रिका नाम । व्यत्यस्तार्धं पूर्वमेवोदाहरणम् (११) एतासामपि पूर्वोक्तपथ्यादिषोडशार्याणां सम्भिन्नतया प्रत्येकं षोडशात्वे सति सङ्ख्या १७३ । एतासामुदाहरणानि स्वयमूह्यानि । विस्तरभयात्तु नोच्यन्ते । पूर्वोक्तानां चतुर्विधगीतानां च तथैव षोडशधात्वे सङ्ख्या ६४ ऐक्ये गीतिसङ्ख्या २४० । पूर्वोक्तषोडशशुद्धार्याभिदैक्ये सङ्ख्या २५६ ।।११।।

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां गीतिप्रकरणम्

मात्राच्छन्दसां प्रकृतत्वाद्वैतालीयप्रकरणमारभते—

वैतालीये छन्दसि विषमे, अर्थात्पादे, प्रथमे तृतीये च षट् कला मात्राः

### बालक्रीड़ा

जघनचपलार्यागीतिजघनविपुलार्या जघनचपलार्यागीतिजघनविपुलार्या
जघनचपलार्यागीत्युभयविपुलार्या महाचपलार्यागीतिपथ्यार्या
महाचपलार्यागीतिजघनविपुलार्या महाचपलार्यागीतिजघनविपुलार्या
महाचपलार्यागीत्युभयविपुलार्या ।।११।।

अब वैतालीव प्रकरण को लिखते हैं ।

जिसके विषम पाद माने प्रथम एवं तृतीय पाद में छ कलाएं ६ मात्राएं

## सेतुः

षट् मात्रा देयाः। तासामन्ते रलौ रश्च लश्च रलौ। मध्यलघू रगणः अन्यो लघुश्च। ततो गुरुश्चेति। समे पादे द्वितीयचतुर्थरूपेऽष्टौ कला देयाः। ताश्च निरन्तरा नो स्युः। नो इति निषेधार्थः। अव्यवहिता लघवो न देयाः इत्यर्थः। तासामष्टकलानामन्ते विषमपादवत् रगणो लघुश्च देयः। अत्र आसु अष्टकलासु मध्ये समाः कला द्वितीयादिकाः पराश्रिता स्तृतीयाद्याश्रिता न कर्त्तव्याः। द्वितीयातृतीयाभ्यामेको गुरुर्न कर्त्तव्य इत्यर्थः। एवं चतुर्थीपञ्चमीभ्यां षष्ठीसप्तमीभ्याञ्च तदिदं वैतालीयं लक्षणम्। चेदत्रैव षड् विषमे इति। प्रथमे विषमपादे षण्मात्रास्तासामन्ते रगणः। अष्टौ समे तासामन्ते रगणः।

## नारायणी

स्युः। समे पादे द्वितीये चतुर्थे चाष्टौ कलाः स्युः। अन्ते उक्तानां कलानामन्ते परस्ताद् रलौ रगणलघू गुरुश्च भवतीति वैतालीयस्वरूपपरिच्छेदः। एतदुक्तं भवति विषमे पादे चतुर्दश 'समे च षोडश मात्राः कार्याः। तन्मध्येऽन्तिमा अष्टौ मात्रा रेफलघुगुरुभिः कार्या इति। विषमे पश्चात्षट् समेऽष्टौ अवशिष्यन्ते, तासां निवेशने नियमविशेषमाह-ताश्चेति। समे ताः षट् कला निरन्तरा नो न स्युः केवलाः षट् लघव एव न कार्याः किं तु गुरुमिश्रा इत्यर्थः। समे विशेषोक्तया विषमे स्वरुचिः। अत्राऽवशिष्टासु च कलासु षट्स्वष्टसु च कला द्वितीया चतुर्थी षष्ठी च परया तृतीयपञ्चमसप्तमकलयाश्रिता मिलिता न भवति, द्वितीयतृतीयकलादीनामेकेन गुरुणोपादान न कार्यमित्याशयः। अत्र विषमपादयोराद्यासु षण्मात्रास्वष्टौ विकल्पाः। यथा — SSS, ।। SS;

## बालक्रीड़ा

हो और अन्त में रगण लघु तथा गुरु हों, और सम पाद द्वितीय एवं चतुर्थ में ८ कलाएं ८ मात्राएं हो और अन्त में रगण लघु तथा गुरु हो वह वैतालीय छन्द है। वह ध्यान में रहे कि सम पाद की ये ८ मात्राएं निरन्तर नहीं रहें यानी ८ लघु हों या आठों गुरु हो ऐसा नहीं हो। तथा इस वैतालीय में समा कला यानी २।४।६

# न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः १२॥

## सेतुः

अथौपच्छन्दसिकम् । पर्यन्त इति । तु किन्तु समे विषमे पादे या अष्टौ-कलाः षट्कलाः । तासामन्ते यौ । रश्च यश्चेति व्यतिरेकद्वन्द्वो रगण यगणौ स्याताम् । शेषं प्रागुक्तनियमादि तथैव वैतालीयवत् यदि भवेत्तदा सुधीभिरौपच्छन्दसिकमुक्तम् । यद्यपि विषमपादान्त्यलघोर्न गुरुत्वमिति प्रागुक्तं तथापि कविसमयप्रसिद्ध रसादिकाव्यविषयं तन् नत्वेतादृशविषयमिति भावः ॥१२॥

## नारायणी

SIS, IIIIS, SSII, IISII, SIIII, IIIIII, समसादयोराद्यास्वष्टमात्रासु त्रयो-दश विकल्पाः—SSSS, IISSS, ISISS, SSIIS, IISIIS, SIIIS, SSSII, IISSII, SIISII, IIIISI, SSIIII, IISIIII एते आर्याभिर्वर्णक्रमेण निबद्धाः कैश्चित्—'मीनाङ्काः (१) सुरसङ्गैः (२) पङ्कजसौ (३) रभितज लाः (४) तरसा रस (५) खगसम्भृत (६) सज्जनमुदि (७) ककुभिककुभि (८) ॥

एते विषमे पादे । हंसस्मेरा (१) अलिकेशाद्या (२) नीरजवक्त्राः (३) कुवलयनेत्राः (४) सुस्वच्छजलाः (५) सुतरङ्गभुजाः (६) केशरद-शना (७) राजन्ते क्रन (८) जनहर्षा भुवि (९) शारदरात्रिषु (१०) विमलनिशाकर (११) भानुप्रभृतिषु (१२) ननु पश्य सुयनु (१३) ॥, एते समे ॥ ततोऽष्टभिस्त्रयोदश गुणिताश्चतुरधिकशतं वैतालीयस्याद्यार्धे भेदाः । एतावन्त एवाऽपरार्धे । परस्परहता जातं दश सहस्त्राण्यष्टौ शतानि षोडश च । अङ्कोऽपि १०८१६ । इयमेवौपच्छन्दसिकापातलिकयोर्वक्ष्यमा णयोः सङ्ख्या ॥१२॥

## बालक्रीड़ा

एवं आठवीं कला पर के दूसरे के आश्रित नही रहे अर्थात् द्वितीय कला तृतीय में चतुर्थ कला पंचम में पष्ठ कला सप्तम में अष्टम कला रगण के आदि गुरु में न मिले ॥१२॥

**पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम् ॥१३॥**

**आपातलिका कथितेयं भाद् गुरुकावथ पूर्ववदन्यत् ॥१४॥**

सेतुः

अथ पातलिकेति। विषमे षणमात्राः समेऽष्टावित्यादि पूर्ववत्। इयांस्तु विशेषः। तासामन्ते भगणो द्वौ गुरू चेति। अन्यदिति पादान्त ह्रस्वस्य गुरुतायाः प्रागुक्तत्वाद् गुर्वन्तता द्रष्टव्या ॥१३॥

अथ दक्षिणान्तिका। तृतीयेति। यस्य वैतालीयस्य चतुर्षु पादेषु द्वितीयो

नारायणी

वैतालीयभेदानाह—

विषमसमपादयोः षण्णामष्टानां च कलानामन्ते यौ रेफयगणौ स्याताम्, शेषं षडष्टकलानियमादि तथैव सामान्यवैतालीयवदेव यदा तदाच्छन्दोविद्भिरौपच्छन्दसिकसंज्ञं वैतालीयमुक्तम्। वैतालीय एव प्रतिचरणमेकगुर्वाधिक्येन विषमपादे षोडश, समपादे चाष्टादशमात्राः कार्या इति भावः ॥१३॥

षण्णामष्टानां च मात्राणां तदन्ते भाद्भगणात्परौ गुरुकौ गुरु स्यातामिति

बालक्रीड़ा

औपच्छन्दसिक—

वैतालीय छन्द के लक्षण के अन्त में रगण और यगण हों शेष बाकी वैतालीय की तरह हो उसे सुधीलोगों ने औपच्छन्दसिक कहा है। अर्थात् विषम पादों में ६ मात्राओं के बाद और समपादों में ८ मात्राओं के अन्त में यदि जहां रगण और यगण रहे तो वह औपच्छासिक छन्द कहलाता है। ॥१३॥

आपातालिका

जहां रगण और यगण के स्थान पर भगण हो और उसके बाद दो गुरु हों और अन्य स्वरूप पूर्ववत् हो उसे आपातालिका छन्द कहा है। अर्थात् विषम पादों में ६ मात्राओं के अन्त में भगण और दो गुरु हों तथा

## तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥१५॥

### सेतुः

लघुस्तृतीयेन लघुना युक्तः स्यात्। प्रथमो लघुर्द्वितीयो गुरुरेव स्यादिति यावत्सा दक्षिणान्तिका ॥१५॥

अथोदीच्यवृत्तिः ! उदीच्येति। यत्र अयुग्मयोरेव पादयोरग्रेण तृतीयेन युक्तश्चेद् द्वितीयो लघुः स्यात्तदा वैतालीयमुदीच्यवृत्तिसंज्ञं ज्ञेयम् ॥१६॥

### नारायणी

रेफलघुगुरूणामपवादः। अथान्यच्छेषं पूर्ववद्वैतालीयवत्। सेयमापातलिका सुधीभिः कथितमिति पर्यन्तसुधीशब्दानुषङ्गेण योज्यम् ॥१४॥

समस्तेषु चतुर्ष्वपि पादेषु द्वितीयलो द्वितीया मात्रा तृतीयया युग् युक्ता चेत्स्यात्, तदा दक्षिणान्तिका नाम स्यादिति। चेत्तदाशब्दयोरध्याहारः कार्यः। सर्वेषु पादेषु द्वितीयवर्णो गुरुरेव कार्य इति। तेन 'न समात्र पराश्रिया कला' (वृ० र० २-१२) इत्यस्यापवादः। शेषं यथाप्राप्तमेवेति भावः। इयं वैतालीयोपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या। अस्मिन्भेदत्रयेऽपि विषमपादयोर्विकल्पौ द्वौ। यथा—ISIS ISII समयोश्चत्वारो यथा—ISISS ISIIS ISISII ISIIII द्वयोश्चतुर्णां च परस्परहतावष्टौ पूर्वार्धे। द्वितीयार्धेऽपि तावन्त एव। तयोरन्योन्यघाते चतुःषष्टिर्भेदा भवन्ति ॥१५॥

### बालक्रीड़ा

समपादों में ८ मात्राओं के अनन्तर भगण और दो गुरु हों उसे आचार्यों ने आपातलिका छन्द कहा है ॥१४॥

दक्षिणान्तिका—

जिसके समस्त पादों में द्वितीय लघु तृतीय से मिला दिया जाय वह दक्षिणान्तिका छन्द कहलाता है। यहाँ (न समात्र पराश्रिता कला) सम कला पराते विषम कला से मिली नहीं हो इसका अपवाद होता है ॥१५॥

**उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥१६॥**
**पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥१७॥**

सेतुः

अथ प्राच्यवृत्तिः। पूर्वेणेति। पूर्वेण चतुर्थेन युक्तः पञ्चमश्चेल्लघुः समपादयोः स्यात्तद्वैतालीयं प्राच्यवृत्तिः ॥१७॥

अथ प्रवृत्तकम्। यदा समाविति। पूर्वयोरुदीच्यवृत्तिप्राच्यवृत्त्योः समौ सदृशौ ओजयुग्मकौ विषमसमपादौ। विषमः पाद उदीच्यवृत्तेः। समः

नारायणी

अयुग्मयोर्विषमयोः प्रथमतृतीययोः पादयोर्द्वितीयलो द्वितीयमात्रा अग्रेण तदग्रिमेण लेन सक्तो युक्तश्चेत्, तदा उदीच्यवृत्तिरुदितेति वक्ष्यमाणानुषङ्गः। शेषं यथाप्राप्तम्। इयं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या। अत्र तु द्वौ विषमयोर्विकल्पौ। यथा—ISIS, ISIII समयोः पूर्वोक्तास्त्रयोदश। परस्परहतौ षड्विंशतिः पूर्वार्धभेदाः। तावन्त एवाऽपरत्र। परस्परहतौ जाता भेदाः षट्शतानि षट्सप्ततिश्च। अङ्कतोऽपि ६७६ ॥१६॥

अथेति यदीत्यर्थे वैलक्षण्ये वा, निपातानामनेकार्थत्वात्। युग्मयोर्द्वितीयचतुर्थपादयोः पञ्चमो लः पञ्चमी मात्रा पूर्वेण चतुर्थेन लघुना यदि युतः, एकेन गुरुणा चतुर्थपञ्चममात्रयोरुपादानं यदि स्यादित्यर्थः। तदा प्राच्यवृत्तिरुदितोक्ता पिङ्गलादिभिरिति। समासान्निष्कृष्टं लशब्दमनुषज्य व्याख्येयम्। शेषं यथाप्राप्तम्। अनयोरपि उदीच्यवृत्तिप्राच्यवृत्त्योः 'न समात्र परिश्रिता कला'

बालक्रीडा

उदीच्यवृत्ति—

जहां विषम पादों में द्वितीय लघु आगे वाले तृतीय से सक्त हो जाय वह उदीच्यवृत्ति छन्द कहलाता है ॥१६॥

प्राच्यवृत्ति—

जहां समपादों में अर्थात् द्वितीय एवं चतुर्थ पादों में पंचम कला अपने पूर्व

**यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥१८॥**

सेतुः

पादः प्राच्यवृत्तेरिति यथासंख्येनान्वयः। क्रमश्च देशसामान्यादिति तार्तीयन्यायादिति भावः। तत्प्रवृत्तकं नाम ॥१८॥

अथापरान्तिका। अस्येति। अस्य प्रवृत्तकस्य समपादैः प्राच्यवृत्ति

नारायणी

( वृ० र० २–१२ ) इत्यस्य पूर्ववदेवापवादः। सेयमपि पूर्ववत् त्रेधा। विषमयोः पूर्वोक्ता अष्टौ विकल्पाः। समयोश्चत्वारः यथा—। ऽ। ऽ। ऽ, ।।। ऽ। ऽ, ऽ। ऽ।।।, ।।। ऽ।।। अष्टानां चतुर्भिर्हतौ द्वात्रिंशत्पूर्वार्धभेदाः। तावन्तएवोत्तरार्धे। परस्परहतौ भेदाश्चतुर्विंशत्यधिकं सहस्रम्। प्रङ्कतोऽपि १०२४ ॥१७॥

यदा पूर्वयोरुदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ क्रमेणौजयुग्मकौ विषम समपादौ स्याताम्, तत्तदाप्रवृत्तकं नाम। विषमयोः प्रथमतृतीययोः पादयोर्द्वितीततृतीयमात्रायोगः। समयोस्तु चतुर्थपञ्चममात्रायोगः स्यादिति भावः। इदं वैतालीयोपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्यम्। तत्र पूर्वोक्तविषमसमपादविकल्पानामन्योन्यहतौ सङ्ख्या स्वयमूहनीया। एवमपरान्तिकादिष्वपि ॥१८॥

अस्य प्रवृत्तकस्य युग्मपादैर्या सम्पूर्णा रचिता साऽपरान्तिका नाम। पञ्चमी चतुर्थमात्रायुक्ता। षोडशमात्रता च चतुर्ष्वपि पादेषु कार्येत्यर्थः।

बालक्रीड़ा

माने चतुर्थ से मिलादी जाय वह छन्द प्राच्यवृत्ति कहलाती है ॥१७॥

प्रवृत्तक—जहां पूर्व के माने उदीच्यवृत्ति एवं प्राच्यवृत्ति के ओज एव युग्मपाद माने विषम एवं समपाद सम तुल्य कर दिये जायें वह प्रवृत्तक छन्द कहलाता है अर्थात् उदीच्यवृत्ति के विषम पाद और प्राच्यवृत्ति के समपाद समानकरके जो छन्द बनाया जायगा वह प्रवृत्तक होगा ॥१८॥

## अस्य युग्मरचिताऽपरान्तिका ॥१९॥
## अयुग्मा चारुहासिनी ॥२०॥

### सेतुः

लक्षणकैर्या सर्वपादैः रचिता साऽपरान्तिका ॥१९॥

अथ चारुहासिनी। अयुग्मेति। प्रवृत्तकस्य विषमपादैरुदीच्यवृत्तिलक्षण-कैर्या रचिता सा चारुहासिनी ॥२०॥

इति वैतालीयं प्रकरणम्।

### नारायणी

इयं च वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन पूर्ववत्त्रेधा। कश्चित्तु 'अस्य वैतालीयादिच्छन्दोवृन्दस्य युग्मरचिता' इति व्याचख्यौ। तन्मते वैतालीयादिपूर्वकत्वेन तत्पूर्वकत्वेन प्राच्यवृत्तिपूर्वकत्वेन च षोढा। उदाहरणानि तु स्वयमूह्यादि भेदाः ॥ २५६ ॥१९॥

अस्य प्रवृत्तकस्याऽयुग्मत्वाऽयुक्पादैर्विषमपादैः रचिता चारुहासिनी समस्त-पादेषु चतुर्दशमात्रिका। द्वितीया च तृतीयायुक्ता कार्येत्यर्थः। इयमपि पूर्ववत् त्रेधा। अस्येति वैतालीयादिच्छन्दोवृन्दपरत्वेन व्याचक्षाणस्य मते तु वैतालीयौपच्छन्दसिकाऽऽपातलिकातदुदीच्यवृत्तिपूर्वकत्येन षोढा। उदाहरणान्यूह्यानि। भेदाः २५६। अन्येऽपि भेदा अन्यैरुक्तास्ते स्वकीयैरुदाहरणैः प्रदर्श्यन्ते। यथा वैतालीयसमपादचतुष्टययुताऽन्येयं दक्षिणान्तिका। यथा—

### बालक्रीड़ा

अपरान्तिका—इस प्रवृत्तक के समपादों से जो छन्द बनाया जायगा वह अपरान्तिका छन्द कहलाता है ॥१९॥

चारुहासिनी—जहां प्रवृत्तक के विषमपादों से जो छन्द बनाया जायगा वह चारुहासिनी छन्द कहलायेगा ॥२०॥

यह वैतालीय प्रकरण समाप्त हुआ। अथ वक्त्रप्रकरणम्।

## नारायणी

पुरुषश्रेष्ठतमः स पुरुषो विषयैर्यस्य मनो हृतं न हि ।
पुरुषक्षुद्रतमः स पुरुषो विषयैर्यस्य मनो हृतं मुहुः ॥

वैतालीयविषमापदरचितोत्तरान्तिका । यथा—

विषयान्विषमान्विषोपमानवधार्य ततोऽवधीर्य च ।
कुरु राघवचिन्तनं सदा यदि ते हितमाहितं स्वकम् ॥

तथाऽऽपातलिकाप्राच्यवृत्त्योर्विषमपादाभ्यां क्रमेण रचितोपपातलिका नाम । यथा—

यः पुरतो वक्त्यतिमिष्टं दोषभाषणरतः परोक्षतः ।
वाञ्छसि सौख्यं त्यज तं द्राङ् मित्रसंज्ञितमरिं विषोपमम् ॥

तथा यद्यापातलिकादीनां सप्तानां छन्दसां प्रतिपादमन्तेऽधिकैकगुरुयोगः स्यात्, तदा तन्नामकान्यौपच्छन्दसिकानि सप्त भवन्ति । तत्रापातलिकौपच्छन्दसिकम् । यथा—

आपातलिकादिषु चेदेको गुरुरधिको भवति प्रतिपादान्ते ।
आपातलिकादिकसंज्ञायुगौपच्छन्दसिकं तदभिप्रेतम् ॥

एवं दक्षिणान्तिकौपछन्दसिकादौ ग्रन्थगौरवप्रसङ्गादस्मदनुक्तान्युदाहरणान्यूह्यानि । एवं च वैतालीयसङ्ख्या सप्तत्रिंशत् ३७ ॥२०॥

इति वैतालीयं प्रकरणम् ॥



अथ वक्त्रस्याऽष्टाक्षरत्वेनानुष्टुभि वक्तव्यस्याऽपि तद्वत्सकलस्य नियतगुरुलघुत्वाभावात्पथ्याचपलादिसंज्ञा कार्या । मात्रावृत्तानामसाङ्कर्याच्च मात्रावृत्तप्रस्ताव एव लक्षणमाह—

## बालक्रीड़ा

अब वक्त्र प्रकरण को कहते हैं ।

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥२१॥

## सेतुः

अथ अनुष्टुप् प्रकरणम् । अनुष्टुभि अष्टाक्षरच्छन्दसि आद्यादक्षरादग्रे नगणो न देयो नापि सगणः । किन्तु मगणादयो देयाः । किञ्च अब्धेश्चतुर्थादक्षरादग्रे यो यगणो देयः (तदग्रे चान्य एको वर्णो देयः) ईदृशमनुष्टुप् छन्दसि वक्त्रमित्युच्यते । यथा अत्रैव व इत्याद्यादक्षरादग्रे "क्त्रं नाद्याद्"

## नारायणी

आद्यादक्षरादूर्ध्वं न्सौ नगणसगणौ न स्याताम्, मगणादिर्यथेच्छं स्यात्, अब्धेश्चतुर्थादक्षरादूर्ध्वं यो यगणः स्याद्यदि, तदा वक्त्रं नाम ख्यातम् । तच्चानुष्टुभि ख्यातमुक्तमाचार्यैरिति । यदातदाशब्दाध्याहारेण ख्यातशब्दावृत्या च व्याख्येयम् । यद्यप्याद्यादब्धेश्चेति गणग्रहणमपि सम्भवति तथाप्यनुष्टुभि ख्यातमित्यष्टाक्षरत्वसूचनाद् गणचतुष्टयासम्भवादब्धिग्रहणस्याऽक्षरपरता । आद्यग्रहणस्यापि च तत्समभिव्याहाराद् गणग्रहणे चतुर्थाक्षरमादाय गणारम्भाच्चतुर्थाक्षरादूर्ध्वं यगणारम्भायोगाच्चाक्षरपरतैव । आद्यात्परतो नगणसगणनिषेधेन द्वितीयतृतीयवर्णान्यतरस्य गुरुताऽवश्यं भवतीति सूचितम् । अनुष्टुभि ख्यातमित्यनेनाष्टाक्षरपादता सूचिता । अतश्चाऽनुक्तोऽप्यष्टमो वर्णो ज्ञेयः । समयोश्च पादयोः प्रथमादक्षरादूर्ध्वं रगणोऽपि न कार्य इति सम्प्रदायः । अत्राद्ये पादे प्रथमस्थाने गुरुलघुरूपौ द्वौ विकल्पौ, द्वितीये नसनिषेधाच्छेषाः षड्गणाः, तृतीयस्थाने एको य एव, चतुर्थस्थाने ग्लौ । अन्योन्यघाते चतुर्विंशतिः। एवं द्वितीयादिपादत्रयेऽपि प्रत्येकं चतुर्विंशतिः । तेषां परस्परहतौ जातं त्रयो लक्षाः एकत्रिंशत्सहस्राणि सप्तशतानि षट्सप्ततिश्चेति सङ्ख्या । अङ्कतोऽपि ३३१७७६ । एषैव सङ्ख्या प्रत्येकं पथ्यावक्त्रादिषु त्रिषु भेदेषूह्या । सम्प्रदायमाश्रित्य द्वितीयचतुर्थपादयोर्द्वितीयस्थाने रगणस्यापि निषेधात्समयोः प्रत्येकं विंशतिर्भेदाः, विषमयोश्चतुर्विंशतिरेव । तेषामन्योन्य-

## बालक्रीड़ा

अनुष्टुप यानी आठ अक्षर वाले छन्द में प्रथम अक्षर से आगे नगण और

**युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥२२॥**
**ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥२३॥**

## सेतुः

इति सर्वगुरुर्मगणोऽस्ति । न तु नगणो न च सगणः । अब्धेश्चतुर्थादक्षराद् ध्वादित्यस्याग्रे "न सौ स्या" इत्यस्तितायमगणः । एवञ्च द्वितीयपादेऽपि द्रष्टव्यम् ॥२१॥

अथ वक्त्रस्य भेदानाहे—युजोरिति । युगिति समपादस्य संज्ञा इत्युक्तम् । युजोः समपादयोः सरिद्भर्तुश्चतुर्थादक्षरादग्रे जेन जगणप्रयोगेण भाव्यम् । विषमपादयोर्यगणेन भाव्यम् । तत्पथ्यावक्त्रं प्रकीर्तितम् । अवशिष्टवत् । एवमग्रेऽपि ॥२२॥

ओजयोरितिः विषमपादयोर्वारिधेश्चतुर्थादक्षरादग्रे जेन जगणप्रयोगेण-

## नारायणी

घाते जाता सङ्ख्या लक्षद्वयं त्रिंशत्सहस्राणि चत्वारि शतानि । अङ्कोऽपि २३०४०० ॥२१॥

अब्धेर्य इत्यस्यापवादेनास्यैव भेदानाह—

युजोर्युग्मयोर्द्वितीयचतुर्थचरणयोः सरिद्भर्तुश्चतुर्थाक्षरात्परेण जगणेन पथ्यावक्त्रं प्रकीर्तितम् पिङ्गलेन 'पथ्या युजो ज्' (पि०सू०५–१४) इति सूत्रे इत्यर्थः । विषमयोस्तु यगणः सामान्यप्राप्तः ॥२२॥

विषमपादयोश्चतुर्थादूर्ध्वं जगणेन तदेव पथ्यावक्त्रं विपरीतशब्दादि

## बालक्रीड़ा

सगण (।।।, ।।S) नहीं हो और अब्धि माने चौथे अक्षर के आगे यगण (।SS) हो तो वह छन्द वक्त्र नाम से ख्यात है ॥२१॥

वक्त्र के ही समपादों में सरिद्भर्त्ता माने चार अक्षर के बाद जगण (।S।) हो तो उसका नाम पथ्यावक्त्र ही कहा गया है ॥२२॥

अयुज पादों में माने विषम पादों में वारिधि माने चार अक्षर

चापलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥२४॥
यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥२५॥

सेतुः

माव्यम् । समपादयोर्यगणेन च । विपरीतपथ्यावक्त्रं नाम ॥२३॥

चपलेति । विषमपादयोश्चतुर्थादग्रे नगणप्रयोगेण । समपादयोर्यगणेन च । चपलावक्त्रं नाम ॥२४॥

अथ युग्मविपुला । यस्यामिति । समपायोयस्यां सप्तमो लघुः स्याच्छेषं वक्त्रवन् सा युग्मविपुला नाम । यद्यपीदं युजोरित्यादि पथ्यावक्त्रेप्यस्ति ताथाप्युपधेयसंकरत्वाददोष एव । पिङ्गलमतेन विपुलोक्ता ॥२५॥

नारायणी

विपरीतपथ्येति ज्ञेयमित्यर्थः । समयोर्य एव ॥२३॥

अयुजोर्विषमयोः पयोराशेश्चतुर्थान्नकारश्चेन्नगणश्चेच्चपलावक्त्रम् । समयोर्य एव ॥२४॥

युग्मे द्वितीये चतुर्थे च पादे सप्तमो वर्णो लो लघुः सा युग्मविपुला मता सम्मता । यद्यपि पथ्यायामपि युजोः सप्तमो लस्तथापि तत्र जगणेनैव अत्र तु नभजतैः सप्तमस्य लघुतेति न सङ्करः । तथाऽपि जगणपक्षे सङ्कर एवेति चेत् तर्हि तत्र संज्ञाविकल्प एवास्तु । ये त्वत्र जेन सप्तमस्य नैव लघुतेत्यसङ्करमाहुस्तेषां मूलस्य लक्ष्यविरोधः । जगणेन लघुकरणात् ।

बालक्रीड़ा

के बाद जगण (ISI) हो तो उसका नाम विपरीतपथ्यावक्त्र छन्द होता है ॥२३॥

अयुज माने विषम प्रथम तृतीय पादों में पयोराशि माने चतुर्थ अक्षर के बाद नगण (III) हो तो उस छन्द का नाम चपलावक्त्र होता है ॥२४॥

जिसके युग्म समपादों में सप्तम अक्षर लघु (I) हो जाय तो उसको युग्म विपुला छन्द नाम से जानते हैं ॥२५॥

# सैतवस्याखिलेष्वपि ॥२६॥

## सेतुः

अथ सैतवमुनिमतेनाह-सैतवस्येति । चतुर्ष्वपि यत्र सप्तमो लघुः सा विपुलेति सैतवस्य मतमित्यर्थः । ये तु चतुर्थाज्जगणेनेव भाव्यमिति सैतवमतमाहुस्तेषां तन्नियमे किम्मानमिति न विद्मस्तस्मात्सा युग्मविपुला मतेत्यत्रैव तजमनान्यतमेन गणेन भाव्यम् चतुर्षु पादेषु सप्तमलघौ सति सैतव विपुलेति निर्णयः । यथा मामकं लक्षणम् । स्यात्सप्तमोऽत्र लघुश्चतुर्षु

## नारायणी

सैतवेन पथाऽर्णवं तीर्णो दशरथात्मजः ।
रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना ॥

इति सैतवमतेन विपुलोदाहरणे जकारेणैव वृत्तिकृता लघुकरणात्तद्विरोधश्चेति पूर्वमेवोत्तरं युक्तं संज्ञाविकल्प इति । अत्र समपादयोस्तृतीये स्थाने चत्वारो विकल्पाः शेषेषु प्राग्वत् । तेन समयोः परस्परहता षण्णवतिर्भेदाः विषमयोः प्रत्येकं पूर्ववच्चतुर्विंशतिः । परस्परहतौ सङ्ख्याऽपि त्रिपञ्चाशल्लक्षाः, अष्टौ सहस्राणि चत्वारि शतानि षोडश च अङ्कतोऽपि ५३०८४१६ । अत्राऽयुग्मे यस्यां लः साऽयुग्मविपुलेत्यकारप्रश्लेषेणापि केचिद्व्याचक्षते । पादव्यत्ययं यत्रोदाहरणमाहुः । विपरीतपथ्याचपलावक्त्राभ्यां चैवं भेदः । तत्र जगणनगणाभ्यां सप्तमस्य लघुता, अत्र तु भ-ताभ्यामपि तस्य तथात्वमिति । उदाहरणं च सप्तमस्य लघुत्वमात्रतात्पर्येण जगणे भरामावेनोक्तमिति चाहुः ॥२५॥

सैतवस्याऽऽचार्यस्य मतेऽखिलेष्वपि पादेषु सप्तमो लः स्यादिति । स्मृत इत्यध्याहारेण सप्तमो ल इति पादानुषङ्गेण व्याख्येयम् । संज्ञा तु विपुलेति निरुपपदैव । अत्र प्रतिपादं षण्णवतिर्भेदाः । तेषां परस्परहतौ सङ्ख्या

## बालक्रीड़ा

जिसके अखिल चारों पादों में सातवाँ अक्षर लघु हो तो वह सैतवा-

## भेनाब्धितो भाद् विपुला ॥२७॥

### सेतुः

चरणेषु सा युग्मविपुलोक्ता सुमतिभिः सैतवस्य मतेन तु । इति ॥२६॥

अथ विपुलाभेदानाह मेनेति । चतुश्चरणेषु चतुर्थाद्भगणप्रयोगेण भविपुला स्यात् । अत एव एकेनैव चरणेनोपलेक्षिता । यत्तु सुल्लक्षणेनोक्तम्-विषमपादयोर्भगणाद्भविपुलेति तन्न । ओ न्तौ चेति सामान्यतः चतुर्थाद्भगणेन भविपुलायाः सूत्रकारेण लक्षितत्वाद्विषमपादयोरित्यत्र मानाभावात् । यदपि ओ न्तौ चेत्यत्र चपलावक्त्रमयुजोर्जेनेति सूत्रादयुग्ग्रहणमनुवर्त्तत इति वृत्तिकारेणोक्तं तदपि न । सर्वतः सैतवस्येति सूत्रात्सन्निहितस्य सर्वपदस्यैवानुवृत्तेर्युक्तत्वात् । भविपुला युग्लः सप्तम इति सूत्रे युग् ग्रहणेन व्यवहितस्यानुवृत्तिर्नास्तीति सूत्रकृता ज्ञापितत्वाच्च । एतेन चपलावक्त्रमित्याद्यनुवर्त्तत इति यत् सुल्लक्षणेनोक्तन्तदपास्तम् । यदपि तेनोदाहृतम् विशालाक्षी कामगजगतिस्त्वरा त्रिपुलस्तनीत्यादि । तदपि, न । तस्य सैतवोक्तविपुलालक्षणाक्रान्ततया भविपुलालक्ष्यत्वाभावात् । एवं हि 'वटे वटे वैश्रवणश्चत्वरे चत्त्वरे शिव' इत्यादिमहाकविप्रयोगोऽपि नास्माकं प्रतिकूलः । एवं र न त विपुलास्वपि ज्ञेयम् ॥२७॥

### नारायणी

अष्टौ कोट्य एकोनपञ्चाशल्लक्षाश्चतुस्त्रिंशत्सहस्राणि षटशती षट्पञ्चाशच्च । अङ्कतोऽपि ८४९३४६५६ ॥२६॥

अब्धितश्चतुरक्षरात्परेण भेन भगणेन भाद् भ इत्यक्षरात्परा विपुला । भविपुलेत्यर्थः । केचिदत्र 'अखिलेष्वपि' इत्यनुवर्तयन्ति । वृत्तिकृतस्तु 'ओ न्तौ च' (पिं० सू० ५-१९) इति सूत्रे 'सर्वतः सैतवस्य' (पिं० सू० ५-१८) इति निवृत्तम 'चपलायुजोन्' (पिं० सू० ५-१६) 'इत्यस्मादयुग्ग्रहणमनुवर्तते' इति वदन्तो विषमपादविषया एव भविपुलाद्या इत्याहुः ॥२७॥

### बालक्रीड़ा

चार्य के मत में युग्म विपुला छंद होता है ॥२६॥

जिसके चारों पादों में अब्धि माने चार अक्षर के बाद भगण (ऽ।।) हो तो उस छन्द का नाम भविपुला होता है ॥२७॥

**इत्थमन्या रश्चतुर्थात् ॥२८॥**
**नोऽम्बुधेश्चेन्नविपुला ॥२९॥**
**तोऽब्धेस्तत्पूर्वाऽन्या भवेत् ॥३०॥**

सेतुः

इत्थमिति । चतुश्चरणेषु चतुर्थादक्षरादग्रे यदा रगणप्रयोगस्तदाऽन्या रविपुला स्यादित्यर्थः ॥२८॥

नोम्बुधेरिति । चतुर्षु चतुर्थान्नगणश्चेत्तदा नविपुला नाम ॥२९।

तोऽब्धेरिति । चतुर्षु चतुर्थात्तगणप्रयोगश्चेत्तदा तविपुला नाम । अत्र अन्याग्रन्थकृतान् म य स गणैर्विपुलात्रयमनुक्तमपि ज्ञेयमिति प्रोचुः । सूत्रादाव-

नारायणी

चतुर्थाक्षरात्परतश्चेन्द्रः रगणस्तदेत्थमन्या यथा भाद्विपुला तथा रादिति रविपुलेत्यर्थः ॥२८॥

अम्बुधेश्चतुर्थान्नो नगणश्चेत्तदा नपूर्वाऽन्या विपुला नविपुलेत्यर्थः ॥२९॥

अब्धेश्चतुर्थात्परस्तगणश्चेत्तदा तत्पूर्विका तकारपूर्विकाऽन्या विपुला तविपुलेत्यर्थः । एवं मयाभ्यां तत्पूर्वे विपुले भवतः । अत्रैतासु चतसृषु पादचतुष्केऽपि तत्तद्गणयोगस्य ये सत्त्वमाहुस्तेषां मतेन यत्रैकस्मिन्द्वयोर्वा तत्तद्गणयोगस्तत्रासां परस्परसंसर्गेणान्ये भेदा ज्ञेयाः । वृत्तिकृन्मते तु विषम-

बालक्रीड़ा

इसी प्रकार चारों पादों में चतुर्थ अक्षर के बाद रगण (ऽ।ऽ) हो तो वह रविपुला छन्द होगा ।।२८।।

जिसके चारो पादों में अम्बुधि माने चतुर्थ अक्षर के बाद नगण (।।।) हो तो वह नविपुला छन्द होगा ॥२९॥

जिसके चारों पादों में चतुर्थ अक्षर के बाद तगण (ऽऽ।) हो तो वह तविपुला छन्द होगा ।।३०।।

## सेतुः

नुक्तत्वादप्रमाणमिति नव्याः । अयन्तेषामाशयः । विशेषलक्षणैर्यदाक्रान्तं लक्ष्यं तस्य तेन तेन नाम्ना व्यवहारः । यत्त्वनाक्रान्तन्तस्यानुष्टुबिति सामान्य जातिनाम्ना व्यवहार इति व लक्ष्यविशेष इति । इत्यनुष्टुप्प्रकरणम् ।।३०।।

## नारायणी

पादयोरेतद्गणयोगः, अन्ययोस्तु सप्तमस्य लघुत्वमात्रम् । यत्र तु चतुर्ष्वपि पादेषु मादियोगस्तस्यानुष्टुप्त्वमेव । न तु वक्त्रत्वमिति विवेकः । तत्राप्ययुक्पादस्य जातिपरत्वे द्वयोरप्ययुजोर्मगणादियोगः, व्यक्तिपरत्वे त्वन्यतराङ्गीकारेणापि लक्षणार्थसिद्धेराद्ये तृतीये वा मगणादियोगः जातिपक्षे म-विपुलोदाहरणम्—

इयं सखे ! चन्द्रमुखो स्मितज्योत्स्ना च मानिनी ।
इन्दीवराक्षी हृदयं दन्दहीति तथापि मे ।।

आद्ये म-विपुलोदाहरणम्—

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ।। (शि० २-१०)

तृतीये—

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ।। (श० २-१६)

रेफविपुलायाः क्रमेणोदाहरणानि—

सकारनानारकासकायसाददसायका ।
रसाहवा वाहसारनादवाददवादना (शि. १६–२३)
महाकविं कालिदासं वन्दे वाग्देवतां गुरुम् ।
यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ।।
कामिनीभिः सहः प्रीतिः कस्मै नाम न रोचते ।
यदि न स्याद्वारिवीचिचञ्चलं हन्त जीवितम् ।।

द्वितीयोऽध्यायः

नारायणी

न-विपुलोदाहरणानि क्रमेण—

युयुत्सुनेव कवचं किमामुक्तमिदं त्वया ।
तपस्विनो हि वसते केवलाजिनवल्कले ॥ (कि. ११-१५)

अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ (र.१२-१२)

तव मन्त्रकृतो मन्त्रैर्दूरात्संशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

भ त-विपुलोदाहरणानि—

सा वैदुष्ये प्रौढिर्यदि सर्वशास्त्रानुगामिनी ।
सा शूरता श्रेष्ठा यदि सर्वशास्त्रानुगामिनी ॥

वन्दे गुरुं रामेश्वरं सर्वशास्त्रविशारदम् ॥
विस्मेराः कम्प्रशिरसो यस्योक्तौ पण्डिताः परे ॥

लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।
लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥

-विपुलोदाहरणानि—

सखा गरीयाञ्शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्यातामभित्रौ मित्रे च सहजप्राकृतावपि ॥ (शि. २-३६)

यियक्षमाणेनाऽऽहूतः पार्थेनाथ द्विषन्मुरम् ।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः ॥ (शि. २-१)

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमपि दुर्मेधसोऽप्यलम् ॥ (शि. २-२३)

-विपुलोदाहरणानि—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

नारायणी

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥
तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।
तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥ शि. २–१ )

एवं ज-विपुलाप्युदाहार्या । तत्र तु समपादयोश्चतुर्थादूर्ध्वं जगणेन पथ्यावक्त्रता, सप्तमस्य लघुतामात्रत्वे ज-विपुलात्वमिति विवेकः। सविपुला तु कविप्रयोगाभावान्नास्ति । अन्येषां तु मते 'युयुत्सुनेव' (कि. ११–१५ ) इत्यादीनां विषमयोश्चपलादित्वात्समयोस्तु पथ्यात्वाच्चपलापथ्यावक्त्रादिसंज्ञा भवन्ति । एवं विपुलापथ्येत्यादिसंज्ञा ज्ञेयाः । अत्र वृत्तिकृन्मते सर्वासु म-विपुलादिषु विषमपादयोः प्रत्येकं चतुर्विंशतिर्भेदाः, समयोः प्रत्येकं षण्णवतिः । परस्परहतौ युग्मविपुलावत्सङ्ख्या ज्ञेया । अन्येषां मते तु मुख्यवक्त्रवत्सङ्ख्या । तथा सङ्कीर्णगणतायां सङ्कीर्णविपुलावक्त्रं भवति। भारवेः—

क्वचिदग्रे प्रसरता क्वचिदाप्लुत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम् ॥

कुमारे—

यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याऽविषयं मनोविषयमात्मनः ॥ (कु. ६-१७)

माघे—

भवद्गिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः ॥ ( शि. २-८ )

इत्यादिना विपुलाभेदा अनन्ता एव कविप्रयोगेषु द्रष्टव्याः । सर्वेषु तु प्रायेण चतुर्थवर्णस्य गुरुतेति साम्प्रदायिकाः ॥३०॥

**द्विकगुणितवसुलघुरचलधृतिरिति ॥३१॥**

**मात्रासमकं नवमो ल्गोऽन्त्यः ॥३२॥**

## सेतुः

अथान्यानि मात्राच्छन्दांस्याह-गुणितेति । वसवोऽष्टौ । द्विगुणितवसवः षोडशेत्यर्थः । तत्संख्याका लघवो यत्र यस्यां सा अचलधृतिर्नाम । प्रत्येकं षोडशलघुपरिमिताश्चत्वारः पादा यस्यां भवन्ति । एवमग्रेऽपि । पिङ्गलस्त्विमां गीत्यार्येत्याचष्टे ॥३१॥

अथास्या भेदानाह-मात्रेति । यत्र षोडशमात्रे छन्दसि नवमी मात्रा

## नारायणी

अथ मात्रासमान्याह —

वर्णच्छन्दोऽप्येतद् द्विगुणितवसुपदस्योत्तरत्रानुवृत्तिसिद्धयर्थं प्रकीर्णकेष्वभ्यधायि । तेन मात्रासमकादिषु षोडशमात्रत्वमधिकृतं भवति । द्विगुणाः वसुलघवोऽष्टौ लघवो यस्यां साऽचलधृतिरिति कथ्यते । चकाराद् गीत्यार्येत्यपि संज्ञा भवति, इति पिङ्गलमतसङ्ग्रहः । षोडशलघुपादेत्यर्थः ॥३१॥

यत्र पादे नवमो ल लघुरेव गुरुश्चान्ते नियतस्तन्मात्रासमकसंज्ञम् । नवमाऽन्त्ययोर्लघुगुरुनियमाच्छेषे नियमाऽभावः सूचितः । सर्वथा षोडशमात्रता कार्येति भावः । सर्वेषु मात्रासमेषु सममात्रा परेण युक्ता न कार्येत्यपि सम्प्रदायः । ततश्च प्रथमे जगणाभावाच्चत्वारो गणविकल्पाः ।

## बालक्रीड़ा

वक्त्रप्रकरण समाप्त हुआ ।

अथ मात्रासमकप्रकरणम् ॥

अब मात्रासमक प्रकरण का आरम्भ करते है । जहां वसु माने आठ लघु द्विकगुणित माने दो से गुणा किये गये हों अर्थात् जिसमें १६ लघु हों तो उसे अचलधृति छन्द कहते हैं ॥३१॥

जहां १६ मात्रा वाले छन्द में नवम लघु हो और अन्तिम एक गुरु

## जोन्लावथाम्बुधे विश्लोक ॥३३॥

### सेतुः

लघुरेव अन्तिमो वर्णो गुरुरेव शेषे त्वनियमः । तन्मात्रासमकं नाम ॥३२॥

जोन्लाविति । अम्बुधेश्चतुर्थमात्रातो जगणश्चेच्छेषं प्राग्वत्तदा विश्लोक इति नाम छन्दः अस्ति वेह । अथाम्बु इति । अथवा चतुर्मात्रातो न्लौ नगणो लघुश्च यस्य । तस्यापि विश्लोक इति नाम । अस्मिन् पक्षे लक्षणरचना त्वेवम् । जोन्लावथ जलधे विश्लोक इति ॥३३॥

### नारायणी

यथा—SS, I I S, S I I, I I I I. द्वितीये त्रयः – SS, I I S, S I, I, मध्यगुरुसर्वलघुगणौ विश्लोकस्येष्टत्वान्न भवतः । तृतीये एकः—I I S. 'नवमो ल' इति वचनादादिगुरुसर्वगुरू न भवतः । मध्यगुरुसर्वलघू तु वानवासिकालक्षणस्पृष्टत्वान्न भवतः । चतुर्थे द्वौ—SS, I IS. गन्तरशाभिधानादन्ये गणा न भवन्ति । एतेषां विकल्पानामन्योन्यघाते प्रतिचरणं चतुर्विंशतिर्भेदाः । चतुर्णां चतुर्विंशत्यङ्कानामन्योन्यहतौ वक्त्रवदेव जाता सङ्ख्या लक्षत्रयं एकत्रिंशत्सहस्री षट्सप्तत्यधिकसप्तशती चेति । अङ्कतोऽपि ३३१७७६ ॥३२॥

अथेत्यथवेत्यर्थः । अम्बुधेः कलाचतुष्टयादूर्ध्वं जगणोऽथवा न्लौ चतुर्लघुर्वा गणः स्यात् । शेषं पूर्ववत् । स विश्लोको नाम मात्रासमकम् । यद्यपि 'विश्लोकः पञ्चमाष्टमौ' ( पि० ४-४४ ) इति सूत्रे पञ्चमाष्टममात्रयोर्लघुत्व मात्रमुक्तम्, तथाऽपि पञ्चमाष्टमयोर्लघुता चतुर्थमात्रानन्तरं जगणचतुर्लघ्वोरेव भवति, नान्यथेत्यभिप्रायेणैवमूचिवान् । जपक्षे इदमेवोदाहरणम् । लपक्षे तु

### बालक्रीड़ा

हो तो उसे मात्रा समक नामक छन्द ने जानते हैं ॥३२॥

सोलह मात्रा वाले पाद में अम्बुधि माने चार मात्रा के बाद ज माने जगण हो चार लघु हों तो वह विश्लोक छन्द होता है ॥३३॥

## तद्युगलाद्वानवासिका स्यात् ॥३४॥

### सेतुः

तदिति । तद्युगलादम्बुधियुगलादष्टमात्रात इत्यर्थः । चेज्जगणो नगणलघू वा सा वानवासिका नाम । अस्ति चेह "नवासि" इति जगणः । न्ल पक्षे तु वानवासिका जलधि युगलात्स्यादिति लक्षणरचना ॥३४॥

### नारायणी

'सेव्यो रघुपतिरात्महितार्थम्' । यत्राद्ये गणे विकल्पाश्चत्वारः । यथा—ऽऽ, ।।ऽ, ऽ।।, ।।।।. द्वितीये द्वौ—।ऽ।, ।।।। तृतीयेऽपि द्वौ—ऽऽ, ऽ।।. मध्यगुर्वन्तगुरुसर्वलघुरूपं भेदत्रयं तु चित्रापादकत्वान्न भवति । चतुर्थे गुर्वन्तं गणद्वयम्—।।ऽ, ऽऽ. एतेषां परस्परघाते द्वात्रिंशत्प्रतिपादभेदाः । एतेषां घाते जाता सङ्ख्या दश लक्षा अष्टचत्वारिंशत्सहस्राणि पञ्च शतानि षट्सप्ततिश्चेति । अङ्कतोऽपि १०४८५७६ ॥३३॥

तद्युगलादम्बुधियुगलादष्टमात्रानन्तरं यदि जो न्लौ वा सा वानवासिकेति । 'जो न्लावथ' ( वृ. र. २–३३ ) इति पदत्रयमनुषज्य योज्यम् । अत्रापि द्वादशश्च वानवासिका' ( पि. सू. ४–४३ ) इति सूत्रे द्वादशचकारलभ्यनवमयोर्लघुतोक्ता, सा चैवमेव नान्यथेत्येवमेवोक्तम् । जपक्ष इदमुदाहरणम् । 'लपक्षे यथा—'लोकहितार्थं हरिहरमूर्ती' । अत्राद्ये गणे विकल्पाश्चत्वारः.ऽऽ, ।।ऽ, ऽ।।, ।।।।. द्वितीये त्रयः.ऽऽ, ऽ।।, ।।ऽ. तृतीये द्वौ-।ऽ।, ।।।।. चतुर्थेऽपि द्वौ--ऽऽ, ।।ऽ, एतेषामन्योन्यताडने भेदाः प्रतिपादमष्टाचत्वारिंशत् । अन्योन्यहतौ जाता सङ्ख्या त्रिपञ्चाशल्लक्षा अष्टौ सहस्राणि चत्वारि शतानि षोडश च । अङ्कतोऽपि ५३०८४१६ ॥३४॥

### बालक्रीड़ा

तद्युगल माने चार की जोडी यानी आठ मात्रा के बाद जगण (।ऽ।) अथवा चार लघु हों तो वह वानवासिका छन्द होता है ॥३४॥

**बाणाष्टनवसु यदि लश्चित्रा ॥३५॥**

**उपचित्रा नवमे परयुक्ते ॥३६॥**

## सेतुः

वाणेति । पञ्चाष्टनवसु यदि लघुः स्यात्सा चित्रा नाम । शेषं प्राग्वत् ॥३५॥

उपचित्रेति । नवमस्थाने गुरौ सति उपचित्रा नाम ॥३६॥

## नारायणी

बाणाः पञ्च । पञ्चमाष्टमनवसु यदि लघुः स्यात् । शेषं पूर्ववत्। तदा चित्रा नाम । अस्यामाद्ये गणे चत्वारो विकल्पाः यथा-SS, ।।S, S।।, ।।।। द्वितीयेऽपि द्वौ--।S।, ।।।।।. तृतीये त्रयः--।।S, ।S।, ।।।।. चतुर्थे द्वौ--SS, ।।S.. अन्योन्यघाते प्रतिपादं भेदसङ्ख्या अष्टाचत्वारिंशत्। अन्योन्यगुणने पूर्वैव सङ्ख्या ॥३५॥

नवमे मात्रास्वरूपे परेण दशमेन युक्ते मिलिते सत्युपचित्रा नाम । शेष प्राग्वत् । जयदेवस्त्वेकादशमात्रास्वपि नियममाह— 'अष्टभ्यो गो ल्यावुपचित्रा' इति । अष्टकलानन्तरं गुरुलघुयगणा इत्यर्थः । अत्र तृतीये गणे द्वौ विकल्पौ--SS, S।।. अन्ये गणविकल्पा मात्रासमकवत् । अन्योन्यघाते सङ्ख्या प्राग्वत् ॥३६॥

## बालक्रीड़ा

सोलह मात्रा वाले छन्द में यदि बाण माने पांच, अष्ट माने आठ, एवं नवम लघु हो तो वह चित्रा छन्द होता है ॥३५॥

सोलह मात्रा वाले छन्द में यदि नवम मात्रा दसवीं से मिली हो यानी दो लघु को एक गुरु माना जाय तो उसको उपचित्रा छन्द कहते हैं ॥३६॥

**अष्टाभ्यो भाद् गावुपचित्रा ॥३६॥**
**यदतीत-कृत-विविध लक्ष्म**
**युतैर्मात्रासमादिपादैः कलितम् ।**

सेतुः

इमामेव अन्यमतेनाह-अष्टाभ्य इति । अष्टमात्रातो गुरुलघुयगणप्रयोगादुपचित्रेत्यर्थः ॥३६॥

नारायणी

अतीतानि पूर्वोक्तानि कृतानि विविधानि नानाप्रकाराणि यानि लक्ष्माणि लक्षणानि तद्युक्तैर्मात्रासमादीनां पञ्चानां पादैः कलितं रचितं तथाऽनियतवृत्तं पादचतुष्केऽपि नियतैकवृत्तलक्षणहीनं परिमाणेन च षोडश मात्रपादत्वेन युक्तम् । ततः कर्मधारयः । एतादृशं यद् वृत्तं तत्पादाकुलकमित्यन्वर्थसंज्ञया ज्ञेममिति तच्छब्दाध्याहारेण योज्यम् । अथ प्रथमपादे मात्रासमकविश्लोकचित्राणां लक्षणयोगः, विश्लोकोपचित्रयोर्द्वितीये, मात्रासमकवानवासिकयोस्तृतीये, उपचित्राविश्लोकयोश्चतुर्थे इति । इदं च प्रतिपादमनेकपूर्वोक्त लक्षणं मत्वोदाहरणं मन्तव्यम् । अन्ये तु प्रतिपादमेकैकलक्षणयोगं वदन्तः समुदितेषु विविधलक्षणयोगाभिप्रायेणेदं व्याचक्षते । वयं तूभयथा व्याख्याने दोषाभावं वदामः । अत एव मात्रा समकादिप्रकृत्या 'एभिः पादाकुलकम्' (पि० सू० ४--४७) इति सूत्रकारः सामान्यत एवाह । तथा मात्रासमकविश्लोकवानवासिकोपचित्राणामसङ्कीर्णपादवदुदाहरणमाह यथा—

बालक्रीडा

किसी के मत में ':अब्धियुगाद् भश्चेदपुचित्रा ऐसा पाठ भी है । अब्धि युग माने आठ के बाद यदि भगण हो तो वह उपचित्रा होती है ।

पूर्व में बताये गये विविध लक्षणों से युक्त मात्रसमादि छन्दों के पादों से जो कलित युक्त हों अतएव वृत्तका परिमाण जहां नियत न हो उसे पादों से

अनियत वृत्त परिमाण सहितं
प्रथितं जगत्सु पादाकुलकम् ॥३७॥

सेतुः

अथ पादाकुलकमाह-यदतीतेति । उक्तविविधलक्षणै मात्रासमकादिलक्षणैर्युतानां मात्रासमकादि पादास्तैः कलित युक्तम् । पादचतुष्टयेऽपि अनियतवृत्तानामनेकवृत्तानां मात्रासमकविश्लोकवानवासिकाचित्रोपचित्राणां परिमाणेन युक्तैः पादै राकुलितत्वात् पादाकुलकं नाम जगत्सु प्रथितमित्यर्थः । यथा-प्रथमे पादेऽत्रैव

नारायणी

अलिवाचालितविकसितचूते काले मदनसमागमदूते ।
स्मृत्वा कान्तां परिहृतसार्थः पादाकुलकं धावति पान्थः ॥ इति ।

सङ्कीर्णोदाहरणं तु मूल एव । तनोभयथापि न दोषः । अत्र पञ्चानां मात्रासमकादीनां परस्परसङ्करे अनन्ता एव भेदाः । तत्र तथा द्वयोर्द्वयोः सङ्करे चत्वारिंदधिकं शतं भेदा भवन्ति । तद्यथा—

| | | | |
|---|---|---|---|
| १<br>२ | २<br>३ | ३<br>४ | ४<br>५ |
| १<br>३ | २<br>४ | ३<br>५ | १४ |
| १<br>४ | २<br>५ | २८ | |
| १<br>५ | ४२ | | |
| ५६ | | | |

१४+२८+४२+५६=१४०

अत्रैककोष्ठस्याङ्कद्वयसङ्ख्याकवृत्तद्वयस्य सङ्करे वक्ष्यमाणोपजातिप्रस्तारमार्गेण चतुर्दश प्रतिकोष्ठं भेदा भवन्ति । एवं प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः प्रथमपञ्चमयोः सङ्करे चत्वारश्चतुर्दशका मिलिताः षट्पञ्चाशद्

# वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ।

## सेतुः

मात्रासमकविश्लोकचित्राणां लक्षणम् । द्वितीये विश्लोकोपचित्रयोः । तृतीये मात्रासमकवानवासिकयोः । चतुर्थे विश्लोकोपचित्रयोः ॥३७॥

अथ सर्वत्र गुरुलघुप्रमाणमाह-वृत्तस्येति । वृत्तस्य ला मात्रा वर्णैर्विना वृत्तवर्णसंख्यया न्यूना या संख्या तत्परिमिता गा गुरुसंख्या ज्ञेया । वृत्तस्य ला विना वर्णैरिति चतुर्दशरूपमात्रासंख्या पादवर्णसंख्यया अष्टरूपया न्यूनीकृता षड्रूपा भवति तत्परिमिता गुरवः सन्ति षड् गुरव

## नारायणी

(५६) भवन्ति । तथा द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमानां सङ्करे द्विचत्वारिंशत् (४२) । तथा तृतीयचतुर्थतृतीयपञ्चमानां सङ्करेऽष्टाविंशतिः (२८) तथा चतुर्थपञ्चमयोः सङ्करे चतुर्दश (१४) इति । सर्वेषां मेलने शतमेकं चत्वारिंशच्च (१४०) एवं त्रयाणां चतुर्णां सङ्करेऽप्यूह्यः । एतेषामुदाहरणान्यूह्यानि । विस्तरभयात्तु नोच्यन्ते । अत्राचलधृत्यादीनां सर्वेषां षोडशमात्रपदत्वेन समत्वान्मात्रासमकसंज्ञा ॥ ३७ ॥

अथोक्तानां वक्ष्यमाणानां च वृत्तानां गुरुलघुमात्रावर्णयत्तापरिज्ञानोपायमाह—

वृत्तस्य ला मात्रा वर्णैर्विना गा गुरवो ज्ञेया इत्यध्याहारः । ला वर्णा गा इत्यादिभिर्वर्णैस्तत्सङ्ख्या लक्ष्यते । ततश्चायमर्थः—यदि वृत्तस्य मात्रावर्णयोः सङ्ख्या विज्ञाता, गुरुलघुसङ्ख्या च न ज्ञाता तदा मात्रासङ्ख्यायां वर्णसङ्ख्यामपनीयाऽवशिष्टा गुरुसङ्ख्या ज्ञेयेति, वर्णसङ्ख्यामध्ये च ज्ञातां गुरुसङ्ख्यामपनीयावशिष्टा लघुसङ्ख्या ज्ञेयेत्याशयः । यदि तु मात्राणां गुरूणां च ज्ञातसङ्ख्यत्वं वर्णाश्चाऽज्ञानसङ्ख्यास्तदा तज्ज्ञानोपायमाह—वर्णा

## बालक्रीड़ा

आकुलित पादाकुलक छन्द कहते है ॥३७॥

अब पहले कहे हुए और आगे कहे जाने वाले वृत्तों के गुरु लघु मात्रा

गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥३८॥

## सेतुः

इति १४ - ८ - ६ । एवं सर्वत्र पद्ये गद्ये च ज्ञेयम् । तथा गुरुभिर्विना गुरु संख्याया अवशिष्टा वर्णा लघुसंख्या ज्ञेयाः । यथात्रैव अष्टाक्षरे पादे षड् गुरवः । इति ज्ञाते तदन्यौ द्वौ लघू इति परिशेषादुपलभ्यते । अथवा लघुषु ज्ञातेषु परिशेषाद् गुरवो ज्ञेयाः । गुरवो लैरिति । लघुभिर्विना लघुसंख्याया अव-

## नारायणी

इति । तथा वृत्तस्य मात्रा गुरुभिर्विना वर्णा ज्ञेया इत्यर्थः । तन्मात्र संख्यायां गुरुसङ्ख्यामपनीयाऽवशिष्टा वर्णसङ्ख्येत्यर्थः । वृत्तमात्रालघु-सङ्ख्याज्ञाने सति गुरुज्ञाने प्रकारान्तरमाह—गुरव इति । वृत्तस्य ला इत्यनुषङ्गः । वृत्तस्य मात्राः लैर्लघुभिर्विना दलेऽर्धे कृते गुरवो ज्ञेयाः । वृत्तमात्रासङ्ख्यायां लघुसङ्ख्यामपनीयाऽवशिष्टां सङ्ख्यामर्धीकृत्य ताव-त्प्रमाणा गुरुसङ्ख्येत्यर्थः । उक्तां गुर्वादिसङ्ख्यामुपसंहरति नित्यमिति । इत्यमुना प्रकारेण प्रमाणं गुर्वादीनां नित्यं सर्वदा निश्चितं भवतीति शेषः । वृत्तस्येत्युपलक्षणम् । गद्यादावपि सम्भवात् । अत्र च गुरुवर्णसङ्ख्याया ज्ञानोपायप्रदर्शनमुपलक्षणार्थम् । तथा हि मात्रावर्णगुरुलघुचतुष्टयात्मके वृत्ते द्वयोर्द्वयोरियत्तापरिच्छेदेऽन्ययोः सङ्ख्यापरिच्छित्तेः । तद्यथा-मात्रावर्णयो-र्मात्रागुर्वोर्मात्रालघ्वोर्वर्णलघ्वोश्च षट्सु द्विकेष्वेकैकद्विकज्ञानेऽपरं द्विकमुक्तया दिशा ज्ञेयमिति । इदं सर्वमुदाहरणे योज्यते—'वागर्थाविव सम्पृक्तौ' ( रघु १-१ ) इत्यत्र चतुर्दशमात्रास्वष्टरूपां वर्णसङ्ख्यामपनीयाऽवशिष्टाः षड् गुरवः । वर्णसङ्ख्यापूरकौ च द्वौ । एवं षड्रूपां गुरुसङ्ख्यामपनीयाऽवशिष्टा वर्णा अष्टौ, गुरूणां षट्त्वादवशिष्टौ द्वौ लघू । एवं लघुद्वयमपनीयावशि-

## बालक्रीड़ा

एवं वर्णों की इयत्ता ( संख्या ) को जानने के उपाय को कहते हैं ।

वृत्त की लघु मात्रा में वर्णों को घटा देने पर गुरु बचता है तथा वृत्त की संख्या में से गुरु को घटाने पर वर्ण बचता है यही गुरु लघु वर्णों का जानने

**शिखिगुणितदशलघुरचित**

**मपगतलघुयुगलमपरमिदमखिलम् ।**

## सेतुः

शिष्टाया मात्रासंख्याया दलेऽर्द्धे या संख्या तत्संख्याका गुरवो ज्ञेया इति गुरु लघुप्रमाणं निश्चितम् । यथात्रैव चतुर्दशमात्रासु द्वौ लघू इति ज्ञात द्वित्वसंख्यातोऽवशिष्टा द्वादशसंख्याः । तदर्द्धसंख्याः षट् । तत्परिमिता गुरव इति ॥३८॥

शिखीति । शिखिभिर्गुणिता दश त्रिशद्भवन्ति । तत्संख्यैर्लघुभी रचितम् । अपगतं लघुद्वयं यस्मिस्तदष्टाविंशतिलघुयुक्तमित्यर्थः । एवं पूर्वार्द्धे लघुसंख्योक्ता । अथ द्वितीयार्द्धे तामाह-अपरमिति । उत्तरार्द्धन्तु अखिलं त्रिशल्लघुयुक्तं न तु पूर्वार्द्धवदष्टाविंशतिलघुकम् । अथोभयोरप्यर्द्धयोरन्ते

## नारायणी

ष्टायां द्वादशसङ्ख्यायामर्धितायां षट्सङ्ख्या गुरवः, गुरुमिर्द्वादशमात्रासिद्धे-श्चतुर्दशमात्रासिद्‌ध्यर्थं द्वौ लघू इति । एवं वर्णगुरुज्ञाने गुरुलघुज्ञाने चेतर-द्वयज्ञानं योज्यम् । एवं सर्वेषु गद्यपद्येषु ॥ ३८ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां

मात्रासमकप्रकरणम् ।

मात्रानियमघटितत्वान्मात्रावृत्तप्रसङ्गेन द्विखण्डकान्याह—

शिखिनो गार्हपत्याहवनीयदक्षिणाग्न्याख्यास्त्रयोऽग्नयः । तैस्त्रित्वाख्या तत्सङ्ख्या लक्ष्यते । तेन शिखिभिर्गुणितास्त्रिगुणीकृता ये दश लघवस्तै रचितमेकं शकलमित्यध्याहारः, अपरमित्यग्रेऽभिधानात् । तच्चाऽपगत न्यूनं लघुद्वयं यस्मात्तादृक्कार्यम् । अपरं द्वितीयं शकलमित्यर्थः । इदं पूर्वोक्त-

## बालक्रीडा

को प्रमाण है । गुरुओं में लघुओं के घटा देने पर मात्रा बचजाती है ॥३८॥

अब शिखाछन्द के लक्षण को कहते हैं । तीन से गुणा किये गये दस लघुओं से रचित माने बने हुए छन्द में दो लघु न हो अर्थात् प्रथम

सगुरु शकलयुगलकमपि सुपरिघटित
ललितपदविततति भवति शिखा ॥३९॥
विनिमयविहित शकलयुगल
लघुललितपदविततिरचितगणनिचया ।

सेतुः

गुरुरस्ति तमाह "सगुरु" इति । अर्द्धद्वयमपि अन्ते गुरुसहितं ज्ञेयम् । सुपरिघटिता ललितपदानां वितती रचना यत्र यथा तथा सा शिखा नाम। अत्राऽकालितोऽर्थः । पूर्वार्द्धेऽष्टाविंशतिर्लघवः । अन्ते गुरुश्च । उत्तरार्द्धे त्रिंशल्लघवोऽन्ते गुरुश्च यस्यां सा शिखेति ॥३९॥

नारायणी

मखिलं समग्रं लघुद्वयान्न्यूनं त्रिंशल्लघुकं भवति । शकलयुगलकमर्धद्वयमपि सगुरु अन्तेऽधिकैकगुरुयुक्तम् । सुष्ठु परिघटिता रचिता पदविततिः पदरचना यत्र तत् तादृशं च भवति शकलयुगलं यस्यां सा शिखेति, यत्तच्छब्दाऽध्याहारेणार्थः । अयं भावः-पूर्वार्धेऽष्टाविंशतिर्लघव एको गुरुरिति एकोनत्रिंशदक्षराणि, उत्तरार्धे त्रिंशल्लघव एकश्च गुरुरित्येकत्रिंशदक्षराणि यत्र सा शिखेति । सुपरिघटितेतिपदेन श्रुतिसुखं यतिः कार्येति सूचयति ॥

इयमेव शिखा यदि विनिमयेन व्यत्यासेन विनिहितं निवेशितं यच्छकलयुगलं तेन कलिता घटिता पदसमुदायकृतसौकुमार्यादिगुणसमुदायवती च, कलितान्तस्य पदादिना कर्मधारयः । श्रुतिसुखकारणी वेति पूर्ववद्यतिः कार्येति

बालक्रीड़ा

अब खञ्जा छन्द को कहते हैं ।

शिखा के दोनों पादों में कहे हुए लघु गुरुओं का विनिमय माने परिवर्तन→ खण्ड में २८ लघु हो और अंत में एक गुरु हो एवं उत्तरार्ध में ३० लघु और अंत में एक गुरु हो तो वह शिखा छन्द है ॥३९॥

**श्रुति सुख कृदियमपि जगति ञि जशिर**
**उपगतवति सति भवति खजा ॥४०॥**

सेतुः

इयमेव पूर्वार्द्धोत्तरार्द्धयोर्वैपरीत्येन खञ्जा भवतीत्याह-विनिमयेति। विनिमयेन विपरीतार्द्धद्वयेन युक्तया पदरचनया विरचितो गणनिचयो यत्र। इयमपि श्रुत्योः सुखकारिणी अपि। ञि ञकारे खजेत्यत्र जकारस्य शिर प्रदेशमुपगतवति प्राप्तवति सति या खजा सा खञ्जेति भवति। लक्ष्यानुरोधादेवमुक्तं खञ्जेत्युच्यमाने हि छन्दोभङ्गः स्यात्। यथोक्तं माघे हिरण्य पूर्वं कशिपुं प्रचक्षते। इति ॥४०॥

नारायणी

सूचितम्। ञि ञकारे। जशिर इति जकारात् प्रागुच्चारणे प्राप्ते सति खजा भवति। खञ्जेति यावत्। गुरुद्वयस्य छन्दसि प्रवेशयितुमशक्यत्वादुक्तिप्रकारोऽयम्। .. विनिमयविनिहितशकलयुगललघुललितपदविततिरचितेति पाठे युगलान्तस्य लघ्वित्यादिना कर्मधारयः। यद्यपि सूत्रकारेण 'अर्धे' (पि. सू. ५-३१) इत्यधिकृत्य 'शिखैकान्नत्रिंशदेकत्रिंशदन्ते ग्' (पि. सू. (५-४४) इति च वदता पूर्वोक्तनियमवदेकोनत्रिंशदक्षरैकत्रिंशदक्षरचितक्रमवदृत्युत्क्रमवत्पादद्वयघटितार्धद्वयवत्यौ विंशत्यधिकशताक्षरे शिखाखञ्जे उक्ते। अत्र तु षष्टयक्षरे एवेति विरोधस्तथापि ग्रन्थान्तरपर्यालोचनयैवमुक्तिः। यद्वासूत्रकारोक्तशिखाखञ्जाभ्यामेते अन्ये एव सूत्रानुक्ते एवात्रोक्ते। सूत्रोक्ते तु चतुर्थेऽध्याये अर्धसमत्वात्स्वयमूह्ये। अथवोभयत्रापि शकलशब्दावयववचनत्वात्पाद रूपावयवपरौ कृत्वा मूलोदाहरणे चार्धविषये मत्वार्धसमत्वेऽपि च

बालक्रीड़ा

जिसमें हो अर्थात प्रथम खण्ड में २८ लघु और अंत में एक गुरु के स्थान पर ३० लघु और एक गुरु हो एवं उत्तरार्ध में ३० लघु और अंत के एक गुरु के स्थान पर २८ लघु एवं एक गुरु कर दिया हो तथा ज के शिर पर ञकार होवे तो उसे खञ्जा छन्द कहते हैं। कानों को सुखकारी

**अष्टावर्धे गा द्वयभ्यस्ता यस्याः सानङ्गक्रीडोक्ता ।**
**दलमपरमपि वसुगुणितसलिलनिधिलघुकविरचितपदवि-**
**तति भवति ।।४१।।**

## सेतुः

अष्टाविति । द्वयभ्यस्ता अष्टौ षोडश भवन्ति । तत्परिमिता यस्याः पूर्वार्द्धे गुरवः । उत्तरार्द्धन्तु द्वात्रिंशल्लघुयुक्तं अनङ्गक्रीडा नाम । चत्वारोह्यष्टगुणिता द्वात्रिंशद् भवन्ति । अनङ्गक्रीडा ।।४१।।

## नारायणी

मात्रा नियमात्मकत्वान्मात्रावृत्तप्रकारेणोक्ति समाधाय सूत्रानुसारः कार्य इति सर्वं सुस्थम् ।। ४० ।।

यस्या अर्धे अष्टौ गा गुरवो द्वयभ्यस्ता द्विगुणाः षोडशेत्यर्थः । अपिश्चार्थः । अपरं च दलं द्वियीयमर्धं वसवोऽष्टौ तैर्गुणिताः सलिलनिधिलघवश्चत्वारो लघवो द्वात्रिंशद्यत्र तत्तादृक्कविना रचिता पदानां विततिर्विस्तरो यत्र तादृक् भवति साऽनङ्गक्रीडेति संज्ञयोक्ता वृत्तज्ञैः । पूर्वार्धे षोडश गुरवः, उत्तरार्धे द्वात्रिंशल्लघवः कार्या इति तात्पर्यार्थः । कवीत्यादिना श्रुतिसुखा यतिर्भवतीत्यसुसूचत् । पैङ्गले त्वियं सौम्येति संज्ञिता । इयमेव व्यत्यस्तार्धतायां ज्योतिराख्या भवति । उदाहरणं तु—

## बालक्रीडा

ललित पदावली इसमें होती है ।।४०।।

अब अनङ्गक्रीडा छन्द को कहते हैं ।

जिसके पूर्वार्द्ध में २ × ८ अर्थात् १६ गा माने गुरु हों और उत्तरार्द्ध में पूर्ववत् ३० लघु एक गुरु यानी ३२ मात्राएं हों तो उसे अनङ्गक्रीड़ा छन्द कहते हैं ।।४१।।

**त्रिगुणित नवलघुरवसितिगुरुरिति दलयुगकृततनुरिह रुचिरा ।।४२।।**

**इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे द्वितीयोध्यायः ।**

## सेतुः

त्रिगुणितेति । त्रिगुणिता नव लघवी यस्या अवसितेऽवसाने गुरुर्यस्येति । भावे क्तिन् । ईदृग्दलद्वयकृता तनुर्यस्याः साऽतिरुचिरा नाम ।।४२।।

श्रीमदग्निहोत्रिलकुतिलकायमानश्रीमदापाजिभट्टसुतभास्करविरचिते वृत्तरत्नाकरसेतौ द्वितीयोऽध्यायः ।

## नारायणी

यदि सुखमनुपमपमरमभिलषसि परिहर युवतिषु रतिमतिशयमिह ।
आत्ज्योतिर्योगाग्यासाद् दृष्टवा दुःखच्छेदं कुर्याः ।
अनयोर्द्वयोः शिखेति सामान्यसंज्ञा पैङ्गले उक्ता ।। ४१ ।।

त्रिगुणा नव लघवो यत्र, सप्तविंशतिरित्यर्थः । अवसितावसाने गुरुर्यस्याः सा तथा इत्यमुना प्रकारेणार्धद्वयरचितशरीरातिरुचिरा संज्ञिता । पैङ्गले त्वियं चूलिकेत्युक्ता । अर्धसमत्वेऽप्यस्या मात्रामात्रघटितत्वादत्रोक्तिः । 'चूलिकैकोनविंशदन्ते ग्' ( पिं० सू० ४–५२ ) इति सूत्रपाठपक्षेणैवमुक्तम् । 'चूलिकाऽर्धमेकोनत्रिंशदेकत्रिंशदन्ते ग्' इति पाठे तु प्रथमं द्वितीयं चार्धं क्रमेणैकोनत्रिंशदेकत्रिंशन्मात्रं भवति' अन्ते च मात्राद्वयस्थाने गुरुरेकः स्यात्सा चूलिकेति सूत्रार्थः । अस्मिन्पक्षे मूलानुक्तमुदाहरणं ममैव—

## बालक्रीड़ा

अब अतिरुचिरा छन्द को कहते हैं—

दलयुग पूर्वार्द्ध एवं उत्तरार्द्ध दोनों दलों में तीन गुणित नौ यानी २७ लघु हों अन्त में अवसिति में एक गुरु हो तो उसे अतिरुचिरा छन्द कहते हैं ।।४२।।

## नारायणी

एकाक्षरपादायामुक्तायां गुरुरेकश्चेत्पादस्तदा श्रीर्नाम। लक्ष्यलक्षणयोरेकाक्षरेण पादेनासङ्ग्रहादघोंदाहरणमेतत्।

नोक्ता उक्तादिभेदा ये ग्रन्थगौरवभीतितः।
तांस्तथा शब्दचिह्नेन वदामोऽन्यत्र दर्शनात्॥

यथा—

---

किञ्च मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते। इति। इत्युक्ताश्छन्दसा संज्ञाः क्रमणो वच्मि साम्प्रतम्। लक्षणं सर्ववृत्तानां मात्रावर्णानुपूर्वकम्। इति तु लिलेख ग्रन्थकारः। ननु कुत्रापि जातिं वच्मि वा जातिं लक्षयामि वेति।

अन्यच्च जातिमधिकुरुते इति लेखनमन्येषां छन्दोविदां लेखेन सह विरुणाद्धि। तथा हि। आर्यादीनि छन्दांसि मात्रावृत्तानि। उक्तादीनि छन्दांसि वर्णवृत्तानि। एवं वर्णवृत्तं वर्णच्छन्द मात्रावृत्तं मात्राछन्दः। एवञ्च छन्दो वृत्तशब्दयोः पर्यायत्वम्। कारणञ्चात्र उभयेषामेषां लक्षणानि मादिभिरष्टभिर्गणैः प्रणिनिन्युः सर्वे पिङ्गलादयः छन्द आचार्याः छन्दः शास्त्रम् छन्दः कौस्तुभः छन्दो मञ्जरी वृत्तरत्नाकरम् इत्यादिग्रन्थेषु।

टि. (१) अत्र ग्रन्थकारः केदारोऽपि बभ्राम। अतः पागलः। पां प्राप्तं गलयति इति पागलः। यदा वृत्तरत्नाकरमिति ग्रन्थनाम कृतं तथा पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा। मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते इति प्रतिज्ञाय, इत्युक्ताः छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम्, लक्षणं सर्ववृत्तानां मात्रावर्णानुपूर्वकमिति क्रमशः कथयामास। अतः अत्र तत्र कुत्रापि ग्रन्थे यदि जातेर्नाम न निर्दिष्टं तदि उपजातिरिति नाम कुतः खात्पतितमतः सर्वमटरस्य पटरमेव उपजातिरित्युल्लेखनम्। इति नो मतलवः मतस्य लवो लेशः। अभिप्राय इत्यर्थः अतोऽयं अनन्तरोदीरित लक्ष्मभाजौ पादौ यदी मावुपवृत्तकं तत्। इत्थं किलान्येष्वपि मिश्रितेषु स्मरन्ति वृत्तेष्विदमेव नाम। पाठस्तु साधीयान्। जातिघटितिस्तु सर्वथा पाठः अशुद्ध.।

## (२) अत्युक्ता गौ स्त्री ॥ २ ॥

## (३) मध्या । मो नारी ॥ ३ ॥

### सेतुः

यथा श्रीशः पायात् । यद्यपि समवृत्ताधिकारे गौ स्त्रीत्यादिवत्पादेनैव स्त्रीं छन्दो लक्षयितुमुचितं तथापि गुः श्रीरिति स्पष्टार्थमर्द्धोपादानं कृतम् । यत्तु सुधादौ लक्ष्यलक्षणयोरेकाक्षरेण पादेनासंग्रहादर्द्धमुक्तमिति व्याख्यातं तन्न, गुः श्रीरित्येकाक्षरेणापि तयोः संग्रहः कर्त्तुं शक्यत्वादिति ।

अत्युक्तायां द्वयक्षरपादे गाविति । यस्याः पादे द्वौ गुरू स्तः सा स्त्री नाम । यथा श्रीमान् भानुः । नित्यं सेव्यः

मध्यायां त्र्यक्षरपादे म इति । यस्याः पादे मगणः ऽऽऽ सा नारी नाम ।

### नारायणी

अस्मत्पितृकृते नव्ये काव्ये रामकुतूहले ।
उक्ता उक्तादयो व्यक्ता विवेक्तव्याः सुयुक्तिभिः ॥

अत्र वक्ष्यमाणसङ्ख्याऽऽख्यानप्रकारेण वृत्तभेदौ २ । न च सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्रेऽनुक्तत्वान्निर्मूलतेति शङ्क्यम् । 'द्विकौ ग्लौ' ( पि. सू. ८–२० ) इति प्रस्तारकथने, 'परे पूर्णम्' ( पि. सू. ८–३३ ) इति मेरुप्रस्तारकथने च सूत्रकारेणाऽपि दर्शितत्वात् । बहुतरप्रचाराभावात्तु गाथाभेदवल्लक्षणानुक्तेरुपपत्तिः ॥ १ ॥

अथाऽत्युक्ता (२)—

द्वौ गुरू यदि पादे स्तस्तदा स्त्री नाम । अत्र वृत्तसङ्ख्या ४ ॥ २ ॥

अथ मध्या (३)—

### बालक्रीड़ा

अब समवृत्तों के क्रम में दो अक्षर वाले अत्युक्ता छन्दों को कहते है यदि दो अक्षर छन्द के प्रतिचरण में दो गुरु हों तो उसको स्त्रीनाम छन्द कहते है । यह अत्युक्ता छन्द का प्रथम भेद है ॥२॥ यहां वृ. सं. ४ है ।

**रो मृगी ॥ ४ ॥**

**(४) तिष्ठा । म्गौप्रचेत्कन्या ॥ ५ ॥**

## सेतुः

यथा-नारीणां कल्याणी । मां पायात्सा वाणी । एवमुत्तरत्र स्वयमुदाहरणीयम् ।

र इति । यत्र रगणः ऽ । ऽ सा मृगी नाम ।

प्रतिष्ठायां चतुरक्षरे पादे "म्गौ" इति । यत्र मगणः ऽऽऽ तत एको गुरुश्च सा कन्या नाम । ५ ।

## नारायणी

मो मगणश्चेत्पादस्तदा नारी नाम ॥ ३॥

रगणश्चेत्पादस्तदा मृगी । अत्र सङ्ख्या ८ ॥ ४ ॥

अथ प्रतिष्ठा (४)—

म्गौ मगणगुरू चेत्पादश्चतुर्गुरुरित्यर्थस्तदा कन्या । अत्र सङ्ख्या १६ ॥ ५ ॥

## बालक्रीड़ा

अब समवृत्तों के तीसरे क्रम में मध्या को कहते हैं । मो नारी यहाँ सर्व गुरु (मगण) है इसे नारी नाम छन्द से जानना चाहिये । यह तीन अक्षर वाले समछन्दों का प्रथम भेद है ॥३॥ यहाँ वृ. सं. ८ है ।

यदि तीन अक्षरों वाले वृत्त के प्रत्येक पाद में रगण हो तो उसे मृगी नाम छन्द कहते हैं । यह मध्या के ८ भेदों में से तीसरा भेद है ॥४॥

अब चार अक्षरों वाले प्रतिष्ठा वृत्त को कहते हैं जिसका प्रथम भेद कन्या है इसके प्रत्येक चरण में एक एक मगण तथा एक गुरु होता है । अर्थात् चार गुरु होते हैं । उसे कन्या छन्द कहते हैं ॥५॥ यहाँ वृ.सं. १६ है ।

(५) सुप्रतिष्ठा—भ्गौ गिति पङ्क्तिः ॥ ६ ॥

(६) गायत्री—त्यौ स्तस्तनुमध्या ॥ ७ ॥

शशिवदना न्यौ ॥ ८ ॥

## सेतुः

सुप्रतिष्ठायां पञ्चाक्षरपादे "भ्गौग्" इति। यत्र भगणः ऽ।। ततो द्वौ गुरू च सा पंक्तिर्नाम । ६ ।

गायत्र्यां षडक्षरपादे त्याविति । यत्र तगण ऽऽ। यगणौ ।ऽऽ चेत्सा तनुमध्या नाम। शशीति। यत्र नगण ।।। यगणौ ।ऽऽ स्तः सा शशिवदना नाम ।

## नारायणी

अथ सुप्रतिष्ठा (५)—

भगणगुरू पुनर्गुरुश्चेत्येवं पङ्क्तिः । सङ्ख्या ३२ ॥ ६ ॥

अथ गायत्री (६)—

त्यौ=तगण-यगणौ यदि स्तो भवतस्तदा तनुमध्येति । यदि तदेत्यध्याहार्यम् ॥ ७ ॥

नगण-यगणौ यदि पादस्तदा शशिवदना नाम ॥ ८ ॥

## बालक्रीड़ा

अब ५ अक्षरों वाले सुप्रतिष्ठा वृत्त को कहते हैं। यदि प्रत्येक पाद में एक भगण के पीछे दो गुरु हों तो पंक्ति नाम छन्द होता है। यह आदि गुरु भगण है उसके आगे पंक्ति में दो गुरु है। सुप्रतिष्ठा के कुल ३२ भेद हो सकते हैं जिसका यह सातवां भेद है ॥६॥

अब समवृत्तों के क्रम में छः अक्षरों वाले गायत्री छन्द को कहते है इसके ६४ भेद है। तनुमध्या इसका १३ वाँ भेद है। यदि छन्द के प्रत्येक पाद में एक तगण और एक यगण हो तो उसे तनुमध्या कहते हैं ॥७॥

**(७) विद्युल्लेखा मो मः ॥ ९ ॥ त्सौ चेद्वसुमती ॥१०॥**
**म्सौ गः स्यान्मदलेखा ॥ ११ ॥**

सेतुः

त्साविति । यत्र तगण ऽऽ। सगणौ ।।ऽ सा वसुमती नाम । विद्युदिति । यत्र द्वौ मगणौ ऽऽऽ,ऽऽऽ सा विद्युल्लेखा नाम । १० ।

उष्णिहि सप्ताक्षरपादे मसाविति । यत्र मगणसगणौ एको गुरुश्च सा

नारायणी

मगणौ चेत्पादस्तदा विद्युल्लेखा नाम ॥ ९ ॥

तगण–सगणौ चेत्पादस्तदा वसुमती । गायत्र्यन्तेषु पादेषु पादान्तयतिरित्याम्नायः । तत्र सङ्ख्या ६४ ॥ १० ॥

अथोष्णिक् (७)—

मगणसगणगुरुभिर्मदलेखा नाम ॥

तथा—

सरगैर्हि समाला ॥ मधुमति ननगाः ॥

बालक्रीड़ा

गायत्री छन्द के ६४ भेदों में १६ वाँ भेद शशिवदना नाम छन्द होता है । जिस (छः अक्षरों वाले) छन्द के प्रति चरण में एक नगण और एक यगण हो तो उसे शशिवदना कहते हैं ॥८॥

गायत्री छन्द के भेदों में प्रथम भेद विद्युल्लेखा नामक छन्द होता है । जिस (छः अक्षरों वाले) छन्द के प्रति चरण में दो मगण अर्थात् सब गुरु हो उसे विद्युल्लेखा कहते हैं ॥९॥

गायत्री समवृत्तों के ६४ भेदों में से २९ वां भेद वसुमती छन्द है। छः अक्षरों वाले गायत्री समवृत्त के प्रत्येक पाद में एक तगण और एक सगण हो तो वसुमती नाम छन्द होता है ॥१०॥

सात अक्षरों वाले उष्णिक् छन्दों में मधु नाम छन्द ६४ वाँ भेद है।

## (८) भौ गिति चित्रपदा गः ॥ १२ ॥

### सेतुः

मदलेखा नाम । कुमारेति । जगणसगणगुरुभिः कुमारललिता नाम । सरगैरिति । सगणरगणगुरुभिर्हंसमाला नाम । ११ ।

अनुष्टुभि अष्टाक्षरपादे भाविति । भगण द्वयेन गुरुद्वयेन च चित्रपदा नाम । १२ ।

### नारायणी

कुमारललिता ज्सौ ग् ॥ चूडामणिस्तमगात् ॥

अत्र द्वाभ्यां पञ्चभिश्च यतिमाहुः केचित् । अन्ये तु पादान्त एव । अत्र सङ्ख्या १२८ ॥ ११ ॥

अथानुष्टुप् (८)--

भगणौ गुरू च यत्र पादे सा चित्रपदा । पादान्ते यतिः ॥ १२ ॥

### बालक्रीड़ा

इसके प्रत्येक पाद में दो नगण और एक गुरु होता है ।

समवृतों के क्रम में सात अक्षरों वाले उष्णिक् छन्द को कहते हैं । इसके १२८ भेद है, यदि प्रत्येक पाद में मगण सगण और एक गुरु हो तो मद लेखा नाम छन्द होता है ॥११॥

१२८ भेदो वाले उष्णिक् छन्दो में कुमार ललिता नामक छन्द ३० वां भेद है । सात अक्षरों वाले इस छन्द के प्रत्येक पाद में जगण सगण और एक गुरु होता है । इस प्रकार के छन्द को कुमारललिता छन्द कहते है ॥११॥

अब समवृत्तों के क्रम में ८ अक्षरों वाले अनुष्टुप् छन्दों के क्रम को कहते है । अनुष्टुप् जाति के २५६ भेद होते है । भौ गिति चित्र ये दोनों आदि गुरु भगण है वा गः ये दोनों गुरु हैं । इसके प्रत्येक पाद में दो भगण और दो गुरु होते हैं यह अष्टुप् समवृत्तों का ५५ वां भेद

**मो मो गो गो विद्युन्माला ॥ १३ ॥**

**माणवकं भात्तलगाः ॥ १४ ॥**

**म्नौ गौ हंसरुतमेतत् ॥ १५ ॥**

सेतुः

म इति । मगणद्वयेन गुरुद्वयेन च विद्युन्माला नाम । माणवकमिति । भगण तगण लघु गुरुभिर्माणवकं नाम । म्नाविति । मगणनगणगुरुद्वयैर्हंस रुतं

नारायणी

मगणौ द्वौ च गुरू विद्युन्मालेति । चतुर्भिश्च यतिरिति सम्प्रदायः ॥ १३ ॥

माद् गणात्तलगास्तगणलघुगुरवो यदि तदा माणवकम् । 'माणवकाक्रीडितकम्' इति पैङ्गले संज्ञा । पूर्ववद्यतिः ॥ १४ ॥

मगण-नगणौ गुरू च द्वावेतसतद्हंसरुतं नाम ॥ १५ ॥

बालक्रीड़ा

है । इस प्रकार के छन्द को चित्रपदा कहते हैं ॥१२॥

अनुष्टुप् समवृत्तों का प्रथम भेद विद्युन्माला है । मो मो गो यह सर्व गुरु मगण है । गो विद्यु यह भी सर्व गुरु मगण है । न्मा ला ये दोनों भी गुरु है । अर्थात् यदि आठ अक्षरों वाले प्रतिपाद में दो मगण तथा दो गुरु हों तो विद्युन्माला छन्द होता है ॥१३॥

२५६ भेदों वाले अनुष्टप् समवृत्तों का यह १०३ वां भेद माणवक नाम छन्द कहलाता है । इसके प्रत्येक पाद में भगण, तगण लघु गुरु होते हैं । ॥१४॥

आठ अक्षरों वाले अनुष्टुप् का ५७ वां भेद हंसरुत नाम छन्द कहलाता है । इसके प्रत्येक पाद में क्रम से भगण नगण और दो गुरु होते हैं । ॥१५॥

## जौ समानिका गलौ च ॥ १६ ॥

## प्रमाणिका जरौ लगौ ॥ १७ ॥

### सेतुः

नाम। जौविति। रगणजगणगुरुलघुभिः समानिका नाम। अत्र १ विषम पादान्त्यवर्णस्य गुरुता एव इति कविसमयप्रसिद्धिर्नावतरति। १६।

प्रमाणिकेति। जगणरगण लघु गुरुभिः प्रमाणिका नाम। वितानमिति समानिकाप्रमाणिकाभ्यामन्यद्वितानं नाम। अत्र जगणतगणौ गुरुद्वय चा

### नारायणी

रेफ-जकारौ गुरुलघू च समानिका नाम ॥ १६ ॥

जगणरेफौ लघुगुरू च प्रमाणिका। समान्येव समानिका, प्रमाण्येव प्रमाणिका। स्वार्थे कश्छन्दोऽनुरोधात्कृतः ॥ १७ ॥

### बालक्रीड़ा

आठ अक्षरों वाले अनुष्टुप् का १७१ वां भेद समानिका छन्द होता है। इसके प्रत्येक पाद में क्रम से रगण जगण और १ गुरु १ लघु होते हैं ॥१६॥

आठ अक्षरों वाले अनुष्टुप् का ८६ वां भेद प्रमाणिका छन्द कहलाता है। इसके प्रत्येक पाद मे जगण रगण और १ लघु तथा १ गुरु होते हैं ॥१७॥

---

१. विषम पाद का अन्तिम वर्ण गुरु ही होता है इस कविसमय प्रसिद्धि का अवतरण यहाँ नहीं है ऐसा लिखने वाले सेतुकार मूल के "वा पादान्ते" पाद के अन्त में विकल्प से गुरु एवं लघु के मानने की कविसमय प्रसिद्धि है इस को नहीं जान पाये। पादान्तस्थं विकल्पेन इसको भी नहीं जान पाये।

## वितानमाभ्यां यदन्यत् ॥ १८ ॥

### सेतुः

स्तीति ताभ्यां भिन्नम्। अन्यपदेनात्र लक्षितं छन्दोऽतिरिक्तमनुष्टुभि उक्तमित्यनेकविधमूह्यम्। यत्तु सुल्लक्षणेन "ज्योत्स्नावितानमैन्दवं पश्य प्रिये ! मनोरमम्" इत्यादि पद्यत्रयमुदाहृत तदसङ्गतम्। नागाचकं तरौ लगाविति तस्य लक्षितत्वात्। एतेन कंकालमालमारिणं कन्दर्पदर्पदारिणमित्यादि विवृतिकृदुदाहृतं प्रत्युक्तम्। यदपि केचिदन्यदितो हि वितानमिति लक्षणसंयुतं लक्षणमाहुस्तदप्यसङ्गतम् चित्रपदालक्ष्यत्वात्। यदपि भट्टाः वयं तु गृह्णीम स तत् एतेषां वितानवेति ग्रन्थनैकौ गुरु द्वौ लघू पुनर्गुरुरित्थमेव

### नारायणी

आभ्यां समानीप्रमाणीभ्यामन्यद्यदनुष्टुब्जातीयं छन्दो वितानसंज्ञकम्। आभ्यामन्यदित्युक्तलक्षणनियमाऽभावोपलक्षणम्। केचित्तु—'समानिकायां गुरुलघुक्रमेण समाप्तिः, प्रमाणिकायां लघुगुरुक्रमेण, विताने तु द्वौ गुरू द्वौ लघू, द्वौ लघू द्वौ गुरू वा, द्वौ गुरू एको लघुः पुनरेको गुरुरिति वा, द्वौ लघू एको गुरुरेको लघुरिति वा, इत्येवं वा नियमः' इत्याहुः। तत्र द्वौ गुरू द्वौ लघू इत्यत्रोदाहरणम्—

तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु।
इष्टा यदि लक्ष्मीस्तदि शिष्टाननिशं संश्रय ॥

द्वौ लघू द्वौ गुरू इत्यत्रोदाहरणम्।

हृदयं यस्य विशालं गगनाभोगसमानम्।
लभतेऽसौ मणिचित्रं नृपतिमूर्ध्नि वितानम् ॥

एवमन्यत्राप्युदाहार्यम्। वयं तु गृह्णीम एतत्, एतेषां वितानतेति न तु नियमः। अत एवोक्तनियमातिक्रमेणैवोदाहरणं मूले। सूत्रमपि 'वितानमन्यत्' ( पिं० सू० ५-८ ) इति सामान्यत एव, न तु नियमं कंचिदाह। वृत्तिकृदपि 'सूत्रकारो वितानस्याऽनेकप्रकारतां दर्शयति' इति वदन्ननेकतामात्रमाह, न तु नियममिति।

(९) अथ बृहती रान्नसाविह हलमुखी ॥ १९ ॥

भजगशिशुभृता नौ मः ॥ २० ॥

सेतुः

पुनरिति सु भविशिष्टस्यानुष्टुप्छन्दसो वितानत्वं वदतामुक्ति आभ्यामन्यदित्य स्योक्तलक्षणनियमाभावोपलक्षणतया स्वयंप्रतिव्याख्यातत्वेन पूर्वग्रन्थ-विरोधाच्च। बृहत्यां नवाक्षरपादे शदिति । रगणतगण

सगणैर्हलमुखी नाम । भुजेति । नगणद्वयेन मगणेन च भुजगशिशु-

नारायणी

तथा—

नाराचिका तरौ लगौ ॥

अत्र सङ्ख्या २५६ ॥ १८ ॥

अथ बृहती (९)—

रगणानन्तरं नगणसगणौ चेदिह छन्दःशास्त्रे हलमुखी नाम। त्रिभिः षड्भिश्च यतिरिति सम्प्रदायः ॥ १९ ॥

द्वाभ्यां नगणाभ्यामेकेन च मगणेन भुजगशिशुभृता । सप्तभिर्द्वाभ्यां

बालक्रीड़ा

अनुष्टुप् इस आठ अक्षर वाले वृत्तों के एक अन्य भेद को वितान कहते हैं।

अनुष्टुप में समानिका प्रमाणिका छन्दों से भिन्न छन्दों का प्रायः नाम वितान है ॥१८॥

अब सम वृत्तों के नौ अक्षर वाले बृहती छन्द को कहते हैं इसके ५१२ भेद होते हैं इस प्रकार नवाक्षर के छन्द के प्रत्येक पाद म क्रमशः रगण से परे नगण सगण हो तो हलमुखी नाम छन्द होता है। यह इसका २५१वां भेद है ॥१९॥

(१०)अथ पङ्क्तिः । म्सौ ज्गौ शुद्धविराडिदं मतम् ॥२१॥

सेतुः

मता नाम । २० ।

पंक्तौ दशाक्षरपादे म्माविति । मगणसगणजगण गुरुभिः शुद्धविराडिति नाम । म्नाविति । मगण नगण जगण गुरुभिः पणवं नमेति प्राञ्चः । वस्तुतस्तु जगण स्थाने यगण उचितः । तथा च सूत्रम् । पणवो म्नौ यगाविति । अत एव मूलेऽपि क्वचिदेवं पाठः । म्नौ य गाविति पणवं नामेदमिति"

नारायणी

च यतिः ।

तथा—

भद्रिकेति रनरैरियम् ॥

वृत्तसङ्ख्या ५१२ ॥ २० ॥

अथ पङ्क्तिः (१०)

मगण–सगणौ जगणगुरू च तच्छुद्धविराण्मतं छन्दोविदाम् । पादान्तेऽत्र यतिः ॥ २१ ॥

बालक्रीड़ा

यदि इसी के प्रत्येक पाद में दो नगण एवं एक मगण हो तो भुजगशिशुभृता नाम छन्द होता है । यह नौ अक्षर वाले ५१२ भेदों मे से ६८ वाँ भेद है ॥२०॥

अब समवृत्तों के दश अक्षर वाले पंक्ति छन्द कहते हैं । यदि प्रति पाद के मगण, सगण, जगण गुरु हों तो शुद्धविराट् नाम छन्द होता है ।

पंक्ति वृत्त केप्रस्तार में इसके १०२४ भेद होते हैं शुद्ध विराट् नामक छन्द इसका ३४५वाँ भेद है ॥ २१ ॥

म्नौ ज्गौ चेति पणवनामेदम् ॥ २२ ॥

जौ रगौ म्यूरसारिणी स्यात् ॥ २३ ॥

भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २४ ॥

## सेतुः

जाविति। रगण जगण रगण गुरुभिर्मयूरसारिणी नाम। भ्माविति। भगण मगण सगण गुरुभी रुकमवती नाम। मत्तेति। मगण भगण सगण गुरुभिर्मत्ता नाम। नरेति। नगण रगण जगण गुरुभिर्मनोरमा

## नारायणी

मगणनगणौ जगण-गुरु चेति पणवनामकम्। पञ्चभिः पञ्चभिश्च यतिः ॥ रगण-जगण-रगण-गुरुभिर्मयूरसारिणी। पादान्ते यतिः ॥ २३ ॥

भ-म-स-गणै-गुरुणा च रुक्मवती नाम। चम्पकमालेत्यन्ये। पादान्ते यतिः ॥ २४ ॥

## बालक्रीड़ा

दश अक्षर वाले पंक्ति छन्द के भेदों के क्रम में १२१वाँ भेद प्रणव नाम छन्द होता है इसके प्रतिपाद मे क्रमशः मगण, नगण, जगण और गुरु होता है ॥२२॥

दश अक्षर वाले पंक्तिवृत्त भेद क्रम में मयूरसारिणी छन्द को कहते हैं इसके प्रतिपाद में रगण, जगण, रगण और गुरु होता है। यह इसका १७१वाँ भेद है ॥२३॥

दश अक्षर पाद वाले पंक्ति वृत्त भेद क्रम मे १९९वाँ भेद रुक्मवती छन्द नाम से जाना जाता है। इसके प्रत्येक पाद में भगण, मगण, सगण, गुरु होता है ॥२४॥

**मत्ता ज्ञेया मभसग युक्ता ।। २५ ।।**

**नरजगैर्भवेन्मनोरमा ।। २६ ।।**

**त्जौ जो गुरुणेयमुपस्थिता ।। २७ ।।**

सेतुः

नाम । तजाविति । तगणेत जगणद्वयेन गुरुणा चोपस्थिता नाम । २७ ।

त्रिष्टुभि एकादशाक्षरवादे स्यादिति । तगणद्वयेन जगणेन गुरुद्वयेन च इन्द्रवज्रा नाम । उपेन्द्रेति । जगण तगण जगणैर्गुरुद्वयेन चोपेन्द्र-

नारायणी

म-भ-स-गणगुरुयुता मत्ता । चतुर्भिः षड्भिश्च यतिः ।। २५ ।।

न-र-जगणगुरुभिर्मनोरमा पादान्ते यतिः ।। २६ ।।

त-ज-जगण-गुरुभिरुपस्थिता नाम । पादान्ते यतिः । द्वाभ्यामष्टभिश्चेत्येके ।।

अत्र सङ्ख्या १०२४ ।। २७ ।।

अथ त्रिष्टुप् ( ११ )—

बालक्रीड़ा

दश अक्षर पाद वाले पंक्ति वृत्त के भेदों में २४वाँ भेद मत्ता नाम छन्द है । जिसके प्रत्येक पाद में क्रमशः मगण, भगण, सगण गुरु और एक उसे हो मत्ता छन्द जानना चाहिए ।।२५।।

दश अक्षर पाद वाले पंक्ति वृतके भेदों ३४८वाँ भेद उपस्थिता नाम छन्द होता है । जिसके प्रत्येक पाद में क्रमशः नगण, रगण, जगण गुरु हो वह मनोरमा नाम छन्द होता है ।।२६।।

यदि दश अक्षर वाले छन्द प्रत्येक पाद में क्रमशः तगण, जगण, जगण गुरु हो तो उपस्थिता नाम छन्द होता है । यह पंक्ति जाति का ३६५वाँ भेद है ।।२७।।

(११) स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २८ ॥

उपेन्द्रवज्रा जतजास्ततो गौ ॥ २९ ॥

अनन्तरोदिरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ ३० ॥

सेतुः

वज्रा नाम। अनन्तरेति। इन्द्रवज्रोपेन्द्रवज्रलक्षणसहितपादैर्युक्ता उपजातयो नाम। एवं प्रकारेण अन्यास्विन्द्रवंशादिमिश्रितासु जातिषु इदमेवोपजातिरिति नाम स्मरन्ति प्रयोगवशात्।

तत्र वंशस्थोपेन्द्रवज्रामिश्रिता यथा वाल्मीकिरामायणे सुन्दरकाण्डे—

नारायणी

त-त- जगणैर्गुरुभ्यां चेन्द्रवज्रा नाम। पादे यतिः ॥ २८ ॥

ज-त-जगणा गुरू चोपेन्द्रवज्रा नाम। पूर्वोक्तैव यतिः ॥ २९ ॥

अव्यवहितोक्तेन्द्रवज्रोपेन्द्रवज्रालक्षणवन्तौ पादौ यत्सम्बन्धिनौ ता उपजातयो नाम। अत्र पूर्वोक्तलक्षणेन पादद्वयेन यथायोगमेकद्वि-

बालक्रीडा

समवृत्तों के भेदक्रम में त्रिष्टुप् ग्यारह अक्षरों वाले छन्द को कहते हैं। इसके २०२२ भेद है। इसका ३५७वाँ भेद इन्द्रवज्रा कहलाता है ग्यारह अक्षरों वाले प्रति पाद में यदि दो तगण एक जगण और दो गुरु हो तो उसे इन्द्रवज्रा कहते हैं ॥२८॥

ग्यारह अक्षरों वाले छन्द के प्रतिपाद मे यदि जगण, तगण, जगण और दो गुरु हों तो वह उपेन्द्रवज्रा छन्द होता है। यह त्रिष्टुप जाति का ३५८वाँ भेद है ॥२९॥

एक जाति के दो वृत्तों के मेल को उपजाति कहा जाता है भिन्न जाति के वृत्तों के मेल से उपजाति नहीं बनती। प्रायः देखा जाता है कि समान जाति वाले सभी वृत्तों में परस्पर का मेल नहीं होता। अपि तु जिनका प्रायः महाकवियों ने प्रयोग किया है ॥३०॥

सेतुः

नमोस्तु वाचस्पतये सचक्रिणे स्वयंभुवे चापि हुताशनाय ।
अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथास्तु नान्यथा ।

इन्द्रवज्रोपेन्द्रवज्रावंशस्थमिश्रिता यथा श्रीमद्भागवते दशमस्कन्धे —

तावत्प्रविष्टास्त्वसुरोदरान्तरं परं न गीर्णाः शिशवः सवत्साः ।
प्रतीक्षमाणेन बकारिवेशनं हृतश्चकान्तामरणेन रक्षसा ।

इन्द्रवज्रेन्द्रवंशोपेन्द्रवज्रावंशस्थ मिश्रिता प्रबोधचन्द्रोदये

विद्याप्रबोधोदयजन्मभूमिर्वाराणसी मुक्तिपुरी निरत्यया । अतः कुलोच्छेदविधिं विधित्सुर्भिनिवस्तु मत्रेच्छ (१) ति नित्यमेव सः । एवं प्रयोगवशादन्यदोनुदाहरणीयम् । एतेन सभाक्षरजातिमिश्रण एवोपजातित्वमिति द्वयोर्द्वयोरेव जात्योर्भिश्रण उपजातित्वमितिच प्राचों ग्रन्था

नारायणी

वारावृत्या निष्पत्तिर्विवक्षिता, न तु द्वाभ्यामेव वृत्तपूर्तिः । पादद्वयमात्रघटितस्य वृत्तस्याभावात् । द्विवचनं लक्षणद्वययोगेन लक्षणया नेयम् । ताश्चतुरक्षरप्रस्तारवत्प्रस्तारे सत्याद्यन्तभेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रात्यागे चतुर्दश भवन्ति । यथा—उइइइ १ इउइइ २ उउइइ ३ इइउइ ४ उइउइ ५ इउउइ उउउइ ७ इइइउ ८ उइइउ ९ इउइउ १० उउइउ ११ इइउउ १२ उइउउ १३ इउउउ १४ इति । तथा च वृद्धाः—

एकत्र पादे चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत् ।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः ॥ इति ।

तत्राद्यभेदोदाहरणम्—

दैत्याधिपप्राणमुषां नखाना-

---

टि. (१) विधित्सुर्भिनिवस्तुमत्रेच्छति नित्यमेव सः । विधित्सुभिः स निवस्तुमिच्छति इति कः पाठ कथमन्वयः । अयं सेतुकारः प्राज्ञमन्यमनाः पागलः । तस्मादयं पाठः । निवास्तुमेषाश्रियते निरन्तरम् । इति साधीयान् । सेतूद्धृतस्तु निरसनीयः ।

## सेतुः

अनादरणीया । अत्र वृद्धाः इन्द्रवज्रोपेन्द्रवज्रमात्रलक्षणकपादोपजाति-भेद सङ्ख्यामाहुः ।

एकत्र पादे, चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत् ।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः२ ।

एकत्रेति । तयोरिन्द्रवज्रोपेन्द्रवज्रयोरन्यतरो भेद एकस्मिन् पादे द्वयो स्त्रिषु वा स्यात्तदा चतुर्दश उपजातयो भवन्ति । यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | उ इ इ इ | कीर्तिः | ९ | उ इ इ उ | आर्द्रा |
| २ | इ उ इ इ | वाणी | १० | इ उ इ उ | भद्रा |
| ३ | उ उ इ इ | माला | ११ | उ उ इ इ | मेया |
| ४ | इ इ उ इ | शाला | १२ | इ इ उ उ | रामा |
| ५ | उ इ उ इ | हंसी | १३ | उ इ उ इ | ऋद्धि |
| ६ | इ उ उ इ | माया | १४ | इ उ इ इ | सिद्धि |
| ७ | उ उ उ इ | जाया | १५ | उ इ इ इ | इन्द्रवजा |
| ८ | इ इ इ उ | बाला | १६ | उ उ उ उ | उपेन्द्रवज्रा |
| १७ | वंशस्थ उपेन्द्र वज्रा | श्यामा | १८ | उपेन्द्रवज्रा वंशस्थ इन्द्रवज्रा | वामा |
| १९ | इन्द्रवज्रा | इन्द्रवंश | उपेन्द्रवज्रा | वंशस्थ | राका |

### नारायणी

मुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम् ॥ ( शि० ३-१८ ) १

मूलश्लोकस्तु पृष्ठभेदोदाहरणम् । एवमन्यभेदेष्वप्युदाहरणानि काव्येषु च विवेचनीयानि ॥३०॥

---

( २ ) एवमेव उपजातिभेदा इत्यत्र उपवृत्तभेदा इति पाठः साधीयान् ।
सेतूद्धृतस्तु निरसनीयः ।

**इत्थं किलान्यास्वपि मिश्रितासु**
**स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥**

सेतुः

तत्राद्यायाः कीर्त्तेरुदाहृणम् ।

सा मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञ
मेनां मुनीनामपि माननीयामात्मानुरूपा विधिनोपयेमे ।

एवं वाण्यांदेरपि स्वयमुदाहरणं अनन्तरोदीरितेति मूलं द्रष्टव्यम् श्लोक-

नारायणी

अन्यास्वपि जगत्यादिजातिष्वित्थं सामान्यसङ्ख्याऽक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितास्विदमेवोपजातिर्नाम वृद्धा स्मरन्ति। ग्रन्थान्तरेभ्यो ज्ञात्वा वदन्तीत्यर्थः। इत्थमित्यनेन विषमवर्णसङ्ख्यानां विषमयतिकानां च जातीनां त्र्यादीनां च मिश्रणे उपजातिर्नाम नास्तीति सूचितम्। स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः। तत्रेन्द्रवंशावंशस्थाभ्यामुदाहरणम् —

इत्थं रथाश्वेमनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ॥
प्रस्थानकालक्षमवेषकल्पना—
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ ( शि० १२-१ )

एवमन्यत्राऽपि प्रयोगवशादुदाहरणं ज्ञेयम् । सर्वासामुपजातीनामुक्तया दिशा चतुर्दश भेदा भवन्ति विपमार्धसमरूपत्वेऽप्युपजातीनां समवृत्तेषूपन्यासः समवृत्तघटिततया प्रासङ्गिकः ॥३१॥ १

बालक्रीड़ा

ग्यारह अक्षरों वाले समवृत्त के भेद क्रम में सुमुखी नाम छन्द को कहते हैं ॥३१॥

सेतः

स्त्वार्द्राख्या नवमी[1] उपजातिः। एकत्र पादे इति तु रामाख्या द्वादशी ॥३०॥

न जेति। नगणः जगणाभ्यां सहितैर्जगण लघू गुरुभिः सुमुखी नाम। दोधकमिति। भगणत्रया द्गुरुद्वयेन दोधकं नाम। अत्र भभभादिति समाहारो द्वन्द्वः। इति भट्टाः। वस्तुतस्तु[1] द्वन्द्वविधेरनेकसुबन्तविषयत्वादत्र चान्तरङ्गैकशेषप्रसङ्गे तदभावप्रसङ्गः कथमन्यथा करावित्यादौ न द्वन्द्वः। तस्माद् भोत्तरो भो भभभ इत्युत्तरपदलोपी समासः।

---

टि. (१) सेतुकारो भ्रान्तोऽत एव पागलः। एकशेषे किमनेकसुबन्तविषयता नास्ति। एकशेषप्रसङ्गे सुबन्तगतानेकत्वं माने एकभिन्नत्वं द्वित्वं बहुत्वं वा नास्ति किम्। यदि अनेकत्वरूपं द्वित्वं नास्ति तदि करौ इति द्विवचनं कुतः अतोऽस्याटरस्य पटरमेव लेखनम्। तेन वृत्तरत्नाकरे छन्दोबोधाय सूत्राणि प्रणिनाय केदारः। सूत्राणि छन्दोवद् भवन्ति। छन्दसि दृष्टानुविधिरतो। भभभादितीह समाहार द्वन्द्वः। नैकशेषप्रसङ्गः। इति राद्धान्तकथा। नात्रोत्तर पदलोपः। अपि तु मध्यमपदलोपः

(२) अत्र ग्रन्थकारः केदारोऽपि बभ्राम। अतः पागलः। पो प्राप्तं गलयति इति पागलः। यदा वृत्तरत्नाकरमिति ग्रन्थनाम कृतं तथा पिङ्गलादिभिराचार्यैरुक्तं लौकिकं द्विधा। मात्रावर्णविभेदेन छन्द-स्तदिह कथ्यते इति प्रतिज्ञाय इत्युक्ताच्छन्दसां संज्ञा क्रमशो वच्मि साम्प्रतम्। लक्षणं सर्ववृत्तानां मात्रावर्णानुपूर्वकमिति क्रमशः कथयामास। अत्र तत्र कुत्रापि ग्रन्थे यदि जातेर्नाम न निर्दिष्टं तदि उपजातिरिति नाम कुतः खात्पतितमत सर्वेनस्याटरपटरमेव उप-जातिरित्युल्लेखनम्। इति नो मतलवः मतस्य लवो लेशः अभि-प्रायः। इत्यर्थः। अतोऽयं अनन्तरोदीरितलक्ष्मभाग्नौ पादौ यदी मावुपवृत्तकं तत्। इत्थं किलात् न्येष्वपि मिश्रिते स्मरन्ति वृत्तेषु-दमेव नाम। इति पाठः साधीयान्। जातिघटितष्पिस्तु सर्वथा अशुद्धः।

**नजजनगैर्गदिना सुमुखी ॥ ३२ ॥**

**दोधकवृत्तमिदं भभभाद्गौ ॥ ३३ ॥**

**शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥३४॥**

## सेतुः

शालिनीति। मगण तगण द्वयेन गुरुद्वयनैव शालिनी नाम। चतुर्भिः सप्तभिश्च यतिरित शेषः। वातोर्मीति। मगण भगण तगणेभ्यो गुरुद्वयेन शालिन्येव वातोर्मीति ज्ञेया। म्भाविति। म भ न ल गुरुभिर्भ्रमरविलनि तगम। रान्निति। रगण भगण रगण लघु गुरुभी रथोद्धता नाम।

## नारायणी

न-ज-जैर्गणैर्लघुगुरुभ्यां च सुमुखी नाम। पञ्चभिः षड्भिश्चयतिः॥३२॥

भगणत्रयाद् गुरुद्वयं चेद्दोधकं नाम। भभभादिति समाहारद्वन्द्वैक-वद्भावः। 'दोधकनामनि भत्रयतो गौ' इति वा पाठः। पादान्ते यतिः॥३३॥

म-त-तै-र्गुरुभ्यां च शालिनी। अब्धिभिश्चतुर्भिर्लोकैः सप्तभिश्च यतिरिति शेषः। एवमुत्तरत्रापि॥३४॥

## बालक्रीड़ा

यह त्रिष्टुप जाति का ८८०वाँ भेद है यदि प्रतिपाद में क्रमसे नगण (।।।) दो जगण ।ऽ। एक लघु और एक गुरु हो तो सुमुखी नाम छन्द होता है ॥३२॥

ग्यारह अक्षरों वाले समवृत के भेद क्रम में दोधक नाम छन्द को कहते हैं। यह त्रिष्टुप् जाति का ४३९वाँ भेद है यदि तीन भगणों के आगे दो गुरु हों तो दोधक वृत्त नामक छन्द होता है ॥३३॥

शालिनी छन्द त्रिष्टुप् वृत्त का २८९वाँ भेद है। प्रतिपाद में अगर एक मगण दो तगण दो गुरु हों तो शालिनी छन्द बनता है ॥३४॥

**वातोर्मीयं कथिता म्भौ तगौ गः ॥ ३५ ॥**

**बाणरसैः स्याद्भूतनगगैः श्रीः ॥ ३६ ॥**

**म्भौ न्लौ गः स्याद् भ्रमारविलसितम् ॥ ३७ ॥**

**रान्नराविह रथोद्धता लगौ ॥ ३८ ॥**

## सेतुः

तेति । रगण नगण भगणेभ्यो गुरुद्वयेन स्वागता नाम । ननेति । नगणद्वयेन

## नारायणी

म-भ-त-गु-गुरुभिर्वातोर्मी । इयमिति शालिन्युक्तयतिमतीत्यर्थः ॥३५॥
भ-त-न-ग-गुरुभिः पञ्चभिः षड्भिश्च यतौ श्रीर्नाम ॥ ३६॥
म-भ-न-लघुगुरुभिर्भ्रमरविलसितम् । चतुर्भिः सप्तभिश्च यतिः ॥३७॥
र-न-र-ल-गैरिह च्छन्दःशास्त्रे रथोद्धता । पादे यतिः ॥३८॥

र-न-भ-गणेभ्यः परं गुरुयुग्मं यदि तदेत्येवं स्वागता । न-न-मादि-

## बालक्रीड़ा

वातोर्मी छन्द त्रिष्टुप वृत्त का ३०५वाँ भेद है यदि प्रतिपाद में क्रमशः मगण, भगण, तगण और दो गुरु हों तो वातोर्मी छन्द होता है ।३५।

त्रिष्टुप् वृत्त का ६८३वाँ भेद श्री छन्द कहलाता है यह छन्द प्रायः मौक्तिकमाला नाम से भी जाना जाता है। यदि प्रतिवाद में क्रमशः भगण, तगण, नगण तथा दो गुरु हो तो 'श्री' छन्द होता है ॥३६॥

जिस वृत्त के प्रत्येक चरण में यदि म्भौन्लौंगः माने क्रमशः मगण, भगण, नगण, लघु और गुरु हो तो वह भ्रमरविलसित छन्द होता है ।३७।

जिस वृत्त के प्रत्येक चरण में रगण, नगण, रगण, लघु और गुरु हों उसे रथोद्धता छन्द कहते हैं। इस के पदान्त में यति होती है ॥३८॥

जिस वृत्त के प्रत्येक चरण में रनभाद्गुरुयुग्मम् माने क्रमशः रगण

**स्वागतेति रनभाद् गुरुयुग्मम् ॥ ३९ ॥**

**ननसजगुरुरचिता वृन्ता ॥ ४० ॥**

**ननरलगुरुभिश्च भद्रिका ॥ ४१ ॥**

**श्येनिका रजौ रलौ गुरुर्यदा ॥ ४२ ॥**

सेतुः

सगणेन गुरुद्वयेन च वृन्ता नाम । यतिः शालिनीवत् । ननरेति । नगणाभ्यां रगण लघु गुरुभिश्च भद्रिका नाम । श्येनिकेति । रगण जगण

नारायणी

त्येकवद्भावः । पूर्ववद्यतिः ॥३९॥

न-न-स ग गुरुकृता वृन्ता नाम । चतुर्भिः सप्तभिश्च यतिः ॥ ४० ॥

न-न-र-ल गैर्भद्रिका । पादे यतिः ॥४१॥

बालक्रीड़ा

( ऽ।ऽ ) नगण ( ।।। ) भगण ( ऽ।। ) एवं अंत में गुरु युग्म माने दो गुरु हों तो वह वृत्त, वह छन्द स्वागत इति नाम से जाना जाता है ॥३९॥

जिस वृत के प्रत्येक पदों, में प्रत्येक चरणों में दो नगण ( ।।। ) एक सगण ( ।।ऽ ) और दो गुरु हों तो वह वृन्ता छन्द होता है ॥४०॥

जिस वृत्त के प्रत्येक पाद में दो नगण ( ।।। ) एक रगण ( ऽ।ऽ ) एक लघु और एक गुरु हो तो उसे भद्रिका छन्द कहते हैं ॥४१॥

जिस वृत्त के प्रत्येक पाद में यदि 'रजौ रलौ' माने एक रगण ( ऽ।ऽ ) एक जगण फिर एक रगण एक लघु एवं एक गुरु हो तो वह श्येनिका वृत होता है ॥४२॥

जिस वृत के प्रत्येक चरण में 'भतनाद् गौ' माने एक भगण (ऽ।।)

**मौक्तिमाला यदि भतनाद्गौ ।। ४३ ।।**

**उपस्थितमिदं ज्सौ ताद् गकारौ ।। ४४ ।।**

## सेतुः

रगण लघु गुरुभिः श्येनिका नाम । मौक्तिकेति पभतनगणेभ्यो गुरुद्वयेन मौक्तिकमाला नाम । पञ्चसु षट्सु च यतिः सम्प्रदायात् । जसस्थितमिति । नमतगणैर्गुरु

## नारायणी

स्पष्टम् । पादे यतिः ।। ४२ ।।

भ-त-नादित्येकवद्भावः । पञ्चसु षट्सु च यतिः ।।४३।।

ज-स-त-ग-गैरुपस्थितम् । पादे यतिः ।।

तथा :—

उपचित्रमिदं सससा लगा ।
कुपुरुषजनिता ननौ गौगः ।।

अनवसिता न्यौ भ्गौ गु षडन्ते ।। अत्र वृत्तानि २०४८ ।। ४४ ।।

अथ जगती ( १२ )—

## बालक्रीड़ा

एक तगण (ऽऽ।) एक नगण (।।।) गौ माने दो गुरु हों तो वह मौक्तिकमाला छन्द होता है वृत्त होता है ।।४३।।

जिस वृत्ताके छन्द के प्रत्येक चरण में क्रमशः 'ज्सौ ताद् गकारौ' माने एक जगण (।ऽ।) एक सगण (।।ऽ) एक तगण (ऽऽ।) दो गुरु हों तो वह उपस्थित छन्द होता है । पूर्वोक्त कहे गये प्रत्येक छन्दों में यति पाद के अन्त में होती है । ये त्रिष्टुप छन्द वृत्ता के अन्तर्गत आते हैं ।।४४।।

## —:अथ जगती:—

जिस वृत्ता के प्रत्येक पाद में क्रमशः रगण (ऽ।ऽ) नगण (।।।) भगण (ऽ।।) और सगण (।।ऽ) हो तो वह चन्द्रवर्त्म छन्द होता है

**(१२) चन्द्रवर्त्म गनिदन्ति रनभसैः ।। ४५ ।।**

**जतौतु बंशस्थमुदीरितं जरौ ।। ४६ ।।**

**स्यादिन्द्रवंशा ततजै रसंयुतैः ।। ४७ ।।**

## सेतुः

द्वयेन चोपस्थितं नाम । पञ्चेति । भतन गणैर्गुरु द्वयेन च श्रीर्नाम । पंचभिः षड्भिश्च यतिः । जगत्यां द्वादशाक्षरपादे चन्द्रेति । रनम सैश्चन्द्रवर्त्म । चतुर्भिरष्टभिश्च यतिः । जताविति । जतज रगणैर्वंशस्थं नाम । स्यादिति । नगण द्वयेन जगण रगणाभ्यां चेन्द्रवंशा नाम ।[1] तत इति न द्वन्द्वः, अपि

## नारायणी

र-न-भ-सैर्गणैश्चन्द्रवर्त्म । चतुर्भिरष्टभिश्च यतिः ।। ४५ ।।

ज-त-ज-रैर्वंशस्थम् । पादे यतिः ।। ४६ ।।

## बालक्रीड़ा

यह बारहवें जगती वृत्त के अन्तर्गत आता है इसलिए इसके प्रत्येक पाद में १२ वर्ण होते हैं तथा इसमें यति क्रमशः चौथे एवं आठवें वर्ण पर होती है ।।४५।।

जिस वृत्त के प्रत्येक पाद में क्रमशः जतौ जरौ माने एक जगण (ISI) एक तगण (SSI) एक जगण (ISI) एक रगण (SIS) हो तो उसे वंशस्थ छन्द अथवा वृत्त कहते हैं पादान्तर में १२ वर्ण पर यति होती है ।।४६।।

जिस वृत्त के प्रत्येक पद में क्रमशः 'ततजौ रसंयुतौ' अर्थात् दो तगण (SSI) एक जगण (ISI) एक रगण (SIS) हो तो वह इन्द्रवंशा छन्द होता है ।।४७।।

---

टि. (१) सेतुकारस्तु तत इति न द्वन्द्वः इति वदन् लिखन् प्रमत्तः । कोऽत्र तत इति अत्र द्वन्द्वं करोति । अत्र तु तश्च तश्च जश्चेतित्रिषि द्वन्द्वः । ततो नैकशपप्रसङ्गः स्वरूपा भवत् । तेन तृतीयाबहुवचनान्तया

**इह तोटकमम्बुधिसैः प्रथितम् ॥ ४८ ॥**

**द्रुतविलम्बितमाह नभौ भरौ ॥ ४९ ॥**

**मुनिशरविरतिर्नौ म्यौ पुटोऽयम् ॥ ५० ॥**

## सेतुः

पतूत्तरपदलोपी समासः । ततो ज शब्देन द्वन्द्वे ''ततजौ'' इति । द्विवचनान्तमुचितम् । तृतीयाबहुवचनान्त पाठस्तु लेखकप्रमादात् तञ्च जौ चेति विगृह्य द्वन्द्वोत्तरपदगर्भ द्वन्द्व इति तत्वम् । इहेति । चतुर्भिः सगणैस्तोटकं नाम । द्रुतेति । न भ भ म रगणैर्द्रुतविलम्बितं नाम । वसुयुगेति । नगणद्वयेन मगण

## नारायणी

त-त-जै रसंयुतै रगणसहितैरिन्द्रवंशा । पादे यतिः ॥ ४७ ॥

अम्बुधिसैश्चतुर्भिः सगणैः तोटकम् । पादे यतिः ॥४८॥

न-भ-भ-रैर्द्रुतविलम्बितमाहाचार्यः । पूर्ववद्यतिः ॥४९॥

## बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में अम्बुधिसैः अम्बुधि माने समुद्र अर्थात् चार सगण ( ।।ऽ ) पाये जायं तो वह तोटक वृत्त होता है । पादन्त में यति होती है ॥४८॥

जिस वृत्त के प्रत्येक चरण में क्रमशः 'नभौ भरौ' यानी एक नगण दो भगण ( ऽ।। ) और रगण ( ऽ।ऽ ) हो तो वह द्रुतविलम्बित छन्द होता है । १२ वर्णों के पदान्त में यति होती है ॥४९॥

जिस वृत्त के प्रत्येक पादो यानी चरणों में 'नौ म्यौ' अर्थात् दो नगण एक मगण एक यगण हों तो वह पुट इस नाम का वृत्त होता है ॥५०॥

---

ततजैरति पाठ एव साधीयान् । ततजौ इति पाठस्तु गडबडः गड सेचने पवाद्य गडः । वडि विभाजने लोकान्तलोपः ।

**प्रमुदितवदना भवेन्नौ च रौ ॥ ५१ ॥**

**नयसहितौ न्यौ कुसुमविचित्रा ॥ ५२ ॥**

**रसैर्जसजसा जलोद्धतगतिः ॥ ५३ ॥**

## सेतुः

गणाभ्यां पुटो नाम। अष्टभिश्चतुर्भिश्च यतिः। भट्टास्तु मुनिशौरै रिति पाठं। धृत्वा सप्तभिः पञ्चभिश्च यतिरित्याहुः। तच्चिन्त्यं पुटो ौ म्यौ वसुसमद्रा इति सूत्रविरोधात्। प्रमुदितेति। नगणाभ्यां रगणा-यां च प्रमुदितवदना नाम। नयेति। नयनयगणैः कुसुमविचित्रा

## नारायणी

ुनिभिः सप्तभिः शरैः पञ्चभिश्च विरतिर्यत्र ।५०॥
पष्टम् ॥ ५१ ॥
पष्टम्। द्वयोरपि पादे यतिः ॥ ५२ ॥

## बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः 'नौ च रौ' यानी दो नगण (।।।) और दो रगण (ऽ।ऽ) हो तो उसे 'प्रमुदितवदना' छन्द कहते हैं। पाद के अन्त में यति वाले इस छन्द को 'पिङ्गलसूत्र' के अनुसार चञ्चलादिका कहा गया है ॥५१॥

जिस वृत्त के प्रत्येक पाद में क्रमशः न य सहितौ न्यौ नगण और यगण के साथ न्यौ माने नगण यगण हों अर्थात् नगण (।।।) यगण (।ऽऽ); नगण (।।।) यगण (।ऽऽ) हों तो वह कुसुमविचित्रा छन्द होता है जिसमें छः छः वर्णों पर यति होती है ॥५२॥

बारह वर्ण के पद वाले जगती वृत्त के अन्तर्गत आने वाले जिस वृत्त के प्रत्येक पाद में क्रमशः जगण, सगण, जगण और सगण हो तो वह

**चतुर्जगणं वद मौक्तिकदाम ॥ ५४ ॥**

**भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ५५ ॥**

**रैश्चतुर्भिर्युता स्रग्विणी सम्मता ॥ ५६ ॥**

## सेतुः

नाम । रसैरिति । जसगणोत्तरो जसगणो यत्र सा जलोद्धत गतिः ।

रसाश्च रसाश्चेत्येकशेषे षड्भिर्यति त्यशुद्ध व्याख्या भट्टानाम् । भुजङ्गेति । चतुर्भिर्य गणैर्भुजङ्गप्रयातं नाम । रैरिति । चतुर्भी रगणैः स्रग्विणी नाम । भवीति ।

## नारायणी

जसाश्च जसाश्चेत्येकशेषे षड्भिश्च यतिः ॥ ५३ ॥

## बालक्रीड़ा

जलोद्धतगति वृत्त होता है । इसमें भी १२ की जगह छः-छः वर्ण पर यति होती है ॥५३॥

जिस वृत्त के प्रत्येक चरण में यदि चार जगण हों तो मौक्तिकदा छन्द होता है । यदि पदान्त में होती है । यह जगती जाति का २९२९वाँ भेद है ॥५४॥

जिस वृत्त के प्रत्येक पाद में यदि चार यगण ( । ऽ ऽ ) हों तो वह भुजङ्ग प्रयात छन्द होता है । पद के अन्त में यति होती है ॥५५॥

जिस वृत्त के प्रत्येक चरण में रैश्चतुर्भियुंता अर्थात चार रगण (ऽ । ऽ ) हों तो वह सर्वसंमति से स्रग्विणी छन्द होता है । पदान्त में यति होती है ॥५६॥

**भुवि भवेन्नभजरैः प्रियंवदा ॥ ५७ ॥**

**त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ॥ ५८ ॥**

**धीरैरभाणि ललिता तभौ जरौ ॥ ५९ ॥**

**प्रमिताक्षरा सजससैरुदिता ॥ ६० ॥**

सेतुः

न भ ज रै गं णैः प्रियंवदा नाम । त्याविति । तय तय गणैं मणिमाला नाम । गुहः स्वामिकार्तिके यः । सेनानीरग्निगुंह इत्यमरः । तस्य वक्त्रैः पड्भिर्यतिरित्यर्थः । धीरैरिति । तभजरैर्ललिता नाम । प्रमितेति । यत्र सजौ सगण द्वयञ्च सा प्रमिताक्षरा नाम । ननेति । ननभ रगणैरुज्वला

नारायणी

त्रीणि स्पष्टानि । पादे यतिः ॥ ५७ ॥

त-य-त-यैर्मणिमाला । गुहस्य स्कन्दस्य वक्त्रैः षड्भिः षड्भिश्च च्छिन्ना यतिमतीत्यर्थः ॥ ५८ ॥

एते स्पष्टे । पादे यतिः ॥ ६० ॥

बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः 'भवेन्नभजरैं' यानी नगण, भगण, जगण और रगण हों तो वह प्रियम्वदा छन्द होता है ॥५७॥

जिस वृत्त के प्रत्येक चरण में त्यौ त्यौ यानी तगण (ऽऽ।) यगण (।ऽऽ) तगण, यगण हों तो वह छः-छः वर्ण पर यति वाला मणिमाला छन्द होता है ॥५८॥

जिस वृत्त के प्रति चरण में यदि तभौ जरौ अर्थात् तगण ऽऽ। भगण (ऽ।।) जगण (।ऽ।) रगण (ऽ।ऽ) हों तो विद्वान लोग उसके ललिता छन्द कहते हैं। यति पदान्त में होती है ॥५९॥

बारह अक्षर वाले जगती जाति का १७७२ वाँ भेद प्रमिताक्षरा छन्द कहा जाता है इसके प्रतिपाद में सगण जगण और फिर दो सगण होते हैं ॥६०॥

**ननभरसहिता महितोज्ज्वला ॥ ६१ ॥**

**पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥**

**अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ६३ ॥**

## सेतुः

नाम। महिता श्रेष्ठा। पञ्चेति। मगण द्वयेन यगण द्वयेन च वैश्वदेवी नाम। पञ्चभिः सप्तभिश्च यतिः। ममावित्यपपाठः ममौ याविति तु पाठःश्रेयान् एवमग्रेऽप्युह्यम्। अब्धीति। म भ स म गणैर्जलधरमाला

## नारायणी

महिता पूजिता। श्रेष्ठेत्यर्थः। उज्ज्वलेति नाम। पादे यतिः ॥ ६१ ॥
पञ्चभिरश्वैः सप्तभिश्च छिन्ना यतिमती वैश्वदेवी नाम ॥ ६२ ॥

अब्धिभिश्चतुर्भिरष्टाभिश्च यतिः। मगण-भगणौ सगण-मगणौ च भवतः तच्जलधरमाला नाम। चतुर्भिरष्टभिश्छिन्नेत्यनुषङ्गः। पैङ्गले त्वियमेव कान्तोत्पीडा ॥६३॥

## बालक्रीड़ा

बारह अक्षरों वाली जगती का १५७२वाँ भेद उज्ज्वला छन्द कहलाता है। इसके प्रतिपाद में दो नगण एक भगण एक रगण क्रम से होते हैं ॥६१॥

यदि समवृत्त के प्रतिपाद में दो मगण और दो यगण हों तो यह जगती का ५७७वाँ भेद वैश्व देवी छन्द कहलाता है करुण रस में इसका प्रयोग सुन्दर होता है ॥६२॥

जगती का २४१वाँ भेद जलधरमाला नाम छन्द कहलाता है इसका दूसरा नाम कान्तोत्पीडा भी है। इस छन्द के प्रतिपाद में क्रमशः मगण, भगण, सगण, मगण होते हैं ॥६३॥

**इह नवमालिका नजभयैः स्यात् ॥ ६४ ॥**

**स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥**

**भवति नजावथ मालती जरौ ॥ ६६ ॥**

## सेतुः

नाम। चतुर्भिः षड्भिश्च यतिः। इहेति। न ज भ य गणैर्नवमालिका नाम। चतुर्भिरष्टभिश्च यतिरिति प्राञ्चः। सूत्रानुयायिनस्तु(१) सप्तभिः

## नारायणी

इह छन्दःशास्त्रेऽष्टाभिश्चतुर्भिश्च यतिरित्याहुर्वृद्धाः ॥६४॥

स्वरैः षड्जादिभिः सप्तभिः शरैः पञ्चभिश्च यतिर्यत्र ॥ ६५ ॥

पञ्चभिः सप्तभिश्च यतिः ॥ ६६ ॥

## बालक्रीड़ा

जगती का ९४४वाँ भेद नवमालिका छन्द कहलाता है, इसके प्रतिपाद में नगण, जगण के बाद भगण, यगण होते हैं। यह नव मालिनी छन्द के नाम से भी जाना जाता है ॥६४॥

जिस वृत्त के प्रत्येक पाद में क्रमशः नौ रौ माने दो नगण और दो रगण हों तथा स्वर शर यानी स्वर ६ होते हैं और कामदेव के शर बाण पाँच होते हैं अतः ६ और पाँच वर्ण पर यति हो तो वह वृत्त प्रभा नाम से जाना जाता है ॥६५॥

जिस वृत्त के प्रत्येक चरण में क्रमशः 'नजावथजरौ' एक नगण (।।।) दो जगण (।ऽ।) एक रगण (ऽ।ऽ) हो तो वह मालती छन्द होता है। इसमें पाँच और सात वर्णों पर यति होती है ॥६६॥

---

टि. (१) सप्तभिः पञ्चभिश्च यतिरित्येव सिद्धान्तः पाठः। वयमपि सेतुसम्मताः।

**जभौ जरौ वदति पञ्चचामरम् ॥ ६७ ॥**

**(१३) अभिनवतामरसं नजजाद्यः ॥ ६८ ॥**

**तुरगरसयतिनौं ततौ गः क्षमा ॥ ६९ ॥**

### सेतुः

पञ्चभिश्च यतिरित मन्यन्ते । स्वरेति । नगणद्वयेन रगणद्वयेन च प्रभा नाम । सप्तभिः पञ्चभिश्च यतिः । भवतीति न ज ज र गणैर्मालती नाम । प्रभावद्यतिरिति वृद्धाः । न युगेति । नगणयुगेन रगणयुगेन च युक्ता गौरी नाम । अभिनवेति । न ज ज य गणैस्तामरसं

### नारायणी

स्पष्टम् । इदमेवान्ये ललितपदमाहुः । पादे यतिः ॥

तथा —

नयुगरयुगलं च गौरी मता ॥
पञ्चमुनी म्मो सात्सयुता ललना ॥
ललितमभिहितं नो ज्रौ नामतः ॥
द्रुतपदं भवति नभनयाश्चेत् ॥

अत्र वृत्तसङ्ख्या ४०९६ ॥ ६८ ॥

अथाऽतिजगती ( १३ ) —

### बालक्रीड़ा

जिस वृत्त प्रत्येक पाद जगण भगण, जगण और रगण हो तो उसे पञ्चचामर कहते हैं ॥६७॥

जिस वृत्त के प्रत्येक पाद में क्रमशः न जं जाद्यः नगण दो जगण और एक यगण हो तो उसे अभिनवतामरस छन्द वृत कहते हैं इसी का दूसरा नाम तामरस छन्द भी है ॥६८॥

—:अथ अतिजगती:—

अतिजगती वृत्त के अन्तर्गत आने वाले वृत्तों के प्रत्येक पाद में १३-१३ वर्ण होते हैं।

**म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ७० ॥**

**चतुर्ग्रहैरतिरुचिरा जभस्जगाः ॥ ७१ ॥**

## सेतुः

नाम। पञ्चेति। म म स सैर्ललना नाम। पञ्चभिः सप्तभिर्यतिः। द्रुतमिति। न न म रैं र्ललित नाम। द्रुतेति न भ न यैर्द्रुतपदं नाम।

अतिजगत्यां त्रयोदशाक्षरपादे वेदैरिति। म त य स गुर्हर्भिर्मत्तयूरं नाम। चतुर्भिर्नवभिश्च यतिः। यमाविति यम र र गुरुभिश्चञ्चरीकावली नाम। चतुरिति। ज भ स ज गुरुभिरतिरुचिरा नाम। चतुर्भिर्न-

## नारायणी

न-न-त-त गुरुभिः क्षमा। सप्तभिः षड्भिश्च तत्र यतिः। चन्द्रि-केत्यन्ये ॥ ६९ ॥

त्रिभिर्दशभिश्च यतिर्यत्र सा ॥ ७० ॥

ज-भ-स-ज गैश्चतुर्षु नवसु च यतावतिरुचिरा ॥ ७१ ॥

## बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः नौ ततौ गः दो नगण, दो तगण एक गुरु हो तथा तुरग रस माने सूर्य के तुरग घोड़े सात होते हैं रस ६ होते हैं अतः सातवें एवं छठवें वर्ण पर यति हो तो वह क्षमा छन्द कहलाता है ॥६९॥

जिस वृत्त के प्रत्येक पाद मे क्रमशः म्नौ ज्रौ ग अर्थात् मगण, नगण, जगण, रगण एवं एक गुरु हो तथा त्रिदश माने तीसरे एवं दशवें वर्ण पर यति हो तो वह प्रहर्षिणी वृत्त कहलाता है ॥७०॥

बावन वर्णों वाले अतिरुचिरा वृत्त के प्रत्येक चरण में क्रमशः ज्भौ सजौ गः, जगण, भगण, सगण, जगण एवं गुरु होता है तथा 'चतुर्ग्रहै' माने चार एवं ग्रह अर्थात् नौ वर्णो पर यति होती है ॥७१॥

**वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७२ ॥**

**उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् ॥ ७३ ॥**

**सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥**

**(१४) ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ७५ ॥**

## सेतुः

भिश्च यतिः। तुरगेति। न न त त गुरुभिः क्षमा नाम। सप्तभिः षड्भिश्च यतिः।

सजेति। स ज स ज गुरुभिर्मञ्जुभाषिणी नाम। पञ्चभिश्च यतिः ॥७४॥ ननेति। न न त र गुरुभिश्चन्द्रिका नाम। चतुर्भिर्यतिः ॥७५॥ म्नाविति।

## नारायणी

वेदाश्चत्वारो रन्ध्राणि नव ॥ ७२ ॥

स्पष्टम्। पञ्चभिरष्टभिश्चात्र यतिः ॥ ७४ ॥

अश्वाः सप्त, ऋतवः षट्। इयं क्षमैव आचार्यो मतभेदेन संज्ञान्तरार्थं पुनरूचे।

तथा—

यमौ रौ विख्याता चञ्चरीकावली गः ॥

## बालक्रीड़ा

बावन वर्णों वाले जिस वृत्त के प्रत्येक पाद में क्रमशः 'म्तौ यसगा' अर्थात् मगण, तगण, यगण, सगण एवं गुरु हो तथा ( वेदै ) चार एवं ( रन्ध्र ) ८ वर्णों पर यति हो तो वह वृत्त मत्तमयूर होता है ॥७२॥

जिसके प्रत्येक पाद में जगण सगण तगण और सगण एक गुरु हो तो वह उपस्थित छन्द होता है ॥७३॥

जिस वृत्त के प्रत्येक पाद में यदि क्रमशः 'सजसा जगौ' यानी सगण, जगण, जगण एवं गुरु हो तो वह मञ्जुभाषिणी वृत्त होता है ॥७४॥

जिस वृत्त के प्रत्येक पाद में क्रमशः ननततगुरु अर्थात् दो नगण दो

## म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा ॥ ७६ ॥

### सेतुः

म न ज र गुरुभिः प्रहर्षिणी नाम । त्रिभिर्दशभिश्च यतिः ॥७६॥

### नारायणी

जभौ स्जगावतिरुचिराम्बुविग्रहैः ॥
भरतमतेनेयमेव पूर्वं रुचिरोक्ता ॥
नसरयुगगैश्चन्द्रलेखर्तुलोकैः ॥
षड्भिः सप्तभिश्च यतिः ॥
ऋतुमुनियतिविद्युन्ननौ तौ गुरुः ॥

अत्र वृत्तसङ्ख्या ८१९२ ॥ ७५ ॥

अथ शक्वरी ( १४ )—

म-त-न-स-गणैर्गुरुभ्यां चासम्बाधा नाम । अक्षैर्बाह्येन्द्रियैः पञ्चभिः, ग्रहैर्नवभिश्च यतिर्यत्र सा तथा ॥ ७६ ॥

### बालक्रीड़ा

तगण और एक गुरु हो तथा अश्चतुंभि' माने ( सूर्य के घोड़े ) सात और ( ऋतु ) छः वर्णों पर यति हो तो वह चन्द्रिका छन्द होता है ॥७५॥

### अथ शक्वरो

शक्वरी वृत्त समवृत्तों का चौदहवाँ भेद है जिसके अन्तर्गत आने वाले वृत्त के प्रत्येक पाद में चौदह वर्ण होते हैं।

जिस वृत के प्रत्येक पाद में क्रमशः म्तौ न्सौ अर्थात् मगण ( ऽऽऽ ) तगण ( ऽऽ। ) नगण ( ।।। ) सगण ( ।।ऽ ) हो तथा दो गुरु हो तो वह-असम्बाधा छन्द होता है। इसमें पाँचवें एवं नौवें वर्ण पर यति होती है ॥७६॥

**नवरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥**

**ननभनलघुगैः प्रहरणकलिता ॥ ७८ ॥**

**उक्ता वसन्ततिलका तभजा जगौ गः ॥ ७९ ॥**

## सेतुः

शक्वर्यां चतुर्दशाक्षरपादे म्ताविति । म त न सैर्गुरु द्वयेन चासम्बधा नाम । पञ्चभिर्नवमिश्च यतिः ॥७७॥ ननेति । न न र स लघुगुरुभिरपराजिता नाम। सप्तभिः सप्तमिश्चयतिः॥७८॥ ननभेति। न न भ न लघुगुरुभिः प्रहरणकलिका नाम । यतिः सप्तभिः सप्तभिः ॥७९॥ उक्तेति । न भ ज जं

## नारायणी

स्वराश्व स्वराश्चेत्येकशेषे सप्तभिः सप्तमिश्व यतिर्भवति ॥ ७७ ॥

पूर्वोक्तैव यतिः ॥ ७८ ॥

त-भ-ज-जा गणा गुरू चेति वसन्ततिलका ॥ ७९ ॥

## बालक्रीड़ा

जिस वृत्त के प्रत्येक चरण में क्रमशः 'ननरसलघुगौ' दो नगण एक रगण एक सगण एक लघु एक गुरु हो तो वह अपराजिता वृत्त होता है इस में सातवें वर्ण पर यति होती है ॥७७॥

जिस वृत्त के प्रत्येक पाद में क्रमशः 'ननमनलग' अर्थात् दो नगण एक भगण, एक नगण एक लघु और एक गुरु हो तो वह ग्रहरणकालिका वृत्त होता है ॥७८॥

चौदह वर्ण के प्रत्येक पाद में यदि क्रमशः 'तभजा जगौ' अर्थात् एक तगण, एक भगण, दो जगण तथा दो गुरु हो तथा प्रत्येक पादान्त में यति हो तो वह बासन्ततिलका छन्द वत्त होता है ॥७९॥

**सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ८० ॥**

**उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ८१ ॥**

**इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८२ ॥**

**(१५) द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥८३॥**

## सेतुः

गुरुद्वयैर्वसन्ततिलका नाम ॥८०॥ अस्या एव संज्ञान्तराणि मतभेदेनाह सिंहेत्यादि पादत्रयेण । सिंहोद्धतेयमिति काश्यपः॥८१॥ उद्धर्षिणीति सैतवः॥८२॥ मधुमाधवी वीति राम इति तिस्रो मतभेदन संज्ञा ज्ञेया इत्यर्थः । शोभावतीत्यप्यन्ये । इन्दुवदनेति । गुरुद्वयसहितैर्भ ज स नैरिन्दुवदना नाम ॥८३॥

## नारायणी

काश्यपेन मुनिनेयं वसन्ततिलकैव सिंहोन्नतोक्ते ति संज्ञान्तरोक्तिः ॥८०॥

सैतवेनत्वाचार्येण यमुद्धर्षिणीत्युक्ता ॥८१॥

गुरुयुगलसहितैर्भ-ज-स-नैः ॥ ८२ ॥

द्विर्द्विवारं सप्तसु छित् छेदो यतिर्यस्याः साऽलोला नाम ॥

तथा—

ननतजगुरुगैः सप्तयतिर्नदी स्यात् ।

लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् ॥

त्रिननगगिति वसुयति सुपवित्रम् ।

## बालक्रीड़ा

इसी को काश्यप मुनि ने कहा है ॥८०॥

इसी को सेतव मुनि ने उद्‌भर्षिणी कहा है ॥८१॥

जिसके प्रत्येक पाद में दो गुरु हो और भ ज स न हो वह इन्दुवदना होता है ॥८२॥

जिसके प्रत्येक चरण में म स म भ और दो गुरु है वह अलोला छन्द है यहां सात सात पर यति होती है ॥८३॥

**द्विहतहयलघुरथ गिति शशिकला ॥८४॥**

**स्रगिति भवति रसनवकयतिरियम् ॥८५॥**

## सेतुः

द्विति। म स म मैर्गुरुभ्याञ्च अलोला नाम। सप्तभिः सप्तभिर्यतिः। अतिशक्वर्यां पञ्चदशाक्षरपादे द्विहतेति। द्विगुणिताः सप्त चतुर्दश लघुभिरेकेन गुरुणा च शशिकला नाम। सप्तभिरष्टभिश्च यतिः ॥८४॥ स्रगिति। षड्भिर्नवभिश्च यतौ शशिकलैव माला नाम ॥८५॥ वसुहयेति।

## नारायणी

मध्यक्षामा युगदशविरामा म्मौ न्यौ गौ ॥

इदमेव कुटिलमित्यन्ये।

नजभजला गुरुश्च भवति प्रमदा ॥

सजसा यलौ गिति शरग्रहैर्मञ्जरी।

नजभजगैर्गुरुश्च वसुषट् कुमारी ॥

नरनरैर्लगौ च रचितं सुकेशरम् ॥

अत्र वृत्तसङ्ख्या १६३८४ ॥ ८३ ॥

अथाऽतिशक्वरी (१५)—

द्विगुणिता हयाः सप्त लघवो यत्र सा तथा। अथ तदनन्तरं गुरुर्गुर्वन्ताश्चतुर्दश लघवः शशिकलेत्यर्थः। इदमेव पैङ्गले नननससैश्चन्द्रावर्ता नामोक्ता। अत्र सप्तभिरष्टभिश्च यतिरिति सम्प्रदायः ॥ ८४ ॥

इयं शशिकलैव रसेषु षट्सु नवसु यतौ स्रगिति संज्ञिता मालेत्यर्थः ॥ ८५ ॥

## बालक्रीडा

पन्द्रह अक्षरों वाले सम वृत्त के भेद क्रम में अतिशक्वरी नाम छन्द का वर्णन करते हैं। इस के प्रस्तार में ३२७६८ भेद होते हैं। जिनमें १६३८४वाँ भेद शशिकला कहलाता है। इसके प्रति पाद में द्विगुणित सात अर्थात् चौदह लघु और एक गुरु हो तो शशिकला छन्द होता है ॥८४।

उपर्युक्त पन्द्रह वर्ण के प्रतिपाद वाले शशिकला वृत्त में ही जब रस

वसुहययतिरिह मणिगुणनिकरः ॥८६॥

ननमयययुतेयं मालिनी भोगिलोकैः ॥८७॥

## सेतुः

अष्टभिः सप्तभिश्च यतौ शशिकलाया एव मणिगुणनिकर इति नाम ॥८६॥ ननेति । न न म य यैर्मालिनी नाम । भोगिभिर्नागैरष्टभिरिति यावत् लोकैः सप्तभिश्च यतिः भवति ॥८७॥ न ज भ ज रैः प्रभद्रकं नाम।

## नारायणी

अष्टसु सप्तसु च यतावियमेव शशिकला मणिगुणनिकरसंज्ञितेति । यतिभेदेन संज्ञान्तरद्वयमुक्तम् ॥ ८६ ॥

भोगिभिर्नागैरष्टभिर्लोकैर्भूरादिभिः सप्तभिर्यताविति शेषः । 'नागलोकैः' इति रुचिरः पाठ ॥ ८७ ॥

## बालक्रीड़ा

नव' अर्थात (९ रस) ६ एवं नव वर्ण पर यति हो तो वह स्रग् नामक वृत्त होता है ॥ ८५ ॥

चौदह लघु एवं एक गुरु इस प्रकार १५ वर्ण के प्रतिपाद वाले जिस वृत्त में 'वसुमुनि' वसु-अष्ट मुनि सप्तर्षि सात अर्थात् आठ एवं सात वर्ण पर यति हो तो वह मणिगुण निकर छन्द होता है ॥ ८६ ॥

जिस वृत्त के प्रत्येक पाद में क्रमशः दो नगण, एक मगण, और दो यगण हो तो वह मालिनी वृत्त होता है जिसमें १५ वर्ण के प्रतिपाद वाले वृत्त में आठ और सात वर्णों पर यति होती है ॥८७॥

**भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥८८॥**

**सजना नयौ शरदशयतिरियमेला ॥८९॥**

**(१६) म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥९०॥**

## सेतुः

सप्तभिरष्टमिश्च यतिः ॥८८॥ संजेति । स ज न म यैरेला नाम । पञ्चभिर्दशभिर्यतिः ॥८९॥ म्राविति। म र म य यैश्चन्द्रलेखा नाम। यतिः स्पष्टा ।९०।

## नारायणी

रसहितौ रगणयुक्तौ । सप्तस्वष्टसु च यतिः ॥ ८८ ॥

शरेषु पञ्चसु दशसु च यतौ स-ज-न-न-यैरेला नाम ॥ ८९ ॥

यान्तावन्ते यगणयुक्तौ ।

तथा—

मा बाणा स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया ॥

नजभजरैर्विराजितमिदं सुकेसरम् ॥

चन्द्रलेखाभिधा रौ म्यौ यो विरामः स्वरा अष्टौ ॥

ननतमरकृताङ्गैः स्वरैरुपमालिनी ॥

अत्र वृत्तानि ३१ ६८ ॥ ९० ॥

अथाऽष्टिः ( १६ )—

## बालक्रीड़ा

जिस वृत्त के प्रत्येक चरण में क्रमशः 'नजौ भजौ' नगण, जगण, भगण, जगण और रगण हो तो वह प्रभद्रक छन्द होता है ॥८८॥

जिस वृत्त के प्रत्येक पाद में क्रमशः 'सजना नयौ' सगण, जगण, दो नगण, एवं यगण हो तो वह एला छन्द होता है इसमें 'शरदश' पाँच और दश वर्ण पर यति होती है ॥८९॥

जिस वृत्त के प्रत्येक पाद में क्रमशः 'म्रौ म्यौ य' अर्थात् मगण, रगण, मगण, दो यगण हों तथा 'सप्ताष्टकै' सात एवं आठ वर्ण पर यति हो तो वह चन्द्रलेखा वृत्त होता है ॥९०॥

**भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥९१॥**

**नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥९२॥**

## सेतुः

अष्टयां षोडशाक्षरपादे ग्राविनि । मराभ्यां त्रिभिर्नैः गुरुणा च ऋषभगजविलसितं नाम ॥९१॥ स्वरात् सप्तग्यः खं विच्छेदो यतिरित्यर्थः न जैरिति । न ज भ ज र गुरुभिर्वाणिनी नाम ॥९२॥ लघुरिति।

## नारायणी

भ्रौ च त्रयो नश्व गुरुश्व तैरिति विग्रहः, स्वरात्सप्तमात्परं खं विरामो यदि तदेति शेषः । सप्तसु यतिः । पादान्ते च यतिः प्राप्तवति सा नोक्ता । स्वरात्परं खं शरीरच्छिद्रनवकं यतिस्थानमिति शेष इति वार्थः । ऋषभेत्यादि सर्वं नाम ॥ ९१ ॥

गयुक्तैर्गुरुयुक्तैः ॥

तथा—

चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥
जरौ जरौ ततो जगौ च पञ्चचाम वदेत् ॥

## बालक्रीड़ा

### अथ अष्टि

समवृत्तों के अन्तर्गत यह अष्टि सोलहवां भेद है जिसके अन्तर्गत आने वाले वृत्त के प्रत्येक पाद में सोलह वर्ण होते हैं

जिस वृत्त के प्रत्येक पाद में क्रमशः 'भ्रत्रिनगैं' अर्थात् भगण, रगण, तीन नगण एवं एक गुरु हों तथा स्वरात्ख अर्थात् स्वर सात पर यति हो तो वह ऋषभगजविलसित वृत्त होता है ॥९ ॥

जिस वृत्त के प्रत्येक पाद में क्रमशः 'नजभजरैं' अर्थात् नगण, जगण, भगण, जगण, रगण और गुरु हो तो उसे वाणिनी छन्द कहते हैं पद के अन्त में यति होती है ॥९२॥

## रसैः रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥९३॥

### सेतुः

पूर्वं लघुः पश्चाद् गुरुरिति षोडशाक्षरैः पञ्चचामरं नाम॥९२॥ पञ्चेति। पञ्चमिमैं गुरुंगा च खगतिर्नाम ॥९२॥

अत्यष्टयां सप्तदशाक्षरपादे रसैरिति। य म न स भ लघु गुरुभि शिखरिणी नाम षड्भिरेकादशभिश्च यतिः ॥९३॥

### नारायणी

सङ्कथिता मगौ नरनगाश्वधीरललिता।
पञ्चमकारयुताश्वगतिर्यदि चान्त्यगुरुः॥
अत्र सङ्ख्या ६५५३६ ॥ ९२ ॥

अथाऽत्यष्टि ( १७ )—

रसैः षड्भी रुद्रैरेकादशभिश्छिन्ना यतिमती ॥ ९३ ॥

### बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः 'जरौ जरौ जगा' जगण, रगण, जगण, रगण, जगण एवं गुरु इस प्रकार सोलह वर्ण हों तथा पदान्त मे यति हो तो वह पञ्चचामर छन्द होता है ॥९२॥

### अथ अत्यष्टि

अत्यष्टि समवृत्तों का सत्रहवां भेद है इसके अन्तर्गत आने वाले वृत्तों के प्रत्येक पाद में सत्रह वर्ण में होते हैं।

जिस वृत्त के प्रत्येक चरण में यदि क्रमशः 'यमन शभलागः' अर्थात् यगण, मगण, नगण, सगण, भगण लघु गुरु हो तथा रसैः रुद्रैः ( रस-६, रुद्र-११ ) छः एवं ग्यारह वर्ण पर यति हो तो वह शिखरिणी वृत्त होता है। ९३॥

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥९४॥
दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ९५ ॥
रसयुगहयैन्सौं म्रौ स्लौ गौ यदा हरिणी तदा ॥९६॥

## सेतुः

जसाविति। ज स न स य लघुगुरुभिः पृथ्वी नाम। अष्टभिर्नवभिश्च यतिः ॥९४॥ दिङ्मुनीति। भ र न भ न लघु गुरुभिर्वंशपत्रपतितं।

## नारायणी

वसुभिरष्टभिर्ग्रहैर्नवभिश्व यतिमती ॥ ९४ ॥

दिशो दश, मुनयः सप्त। दिशो मुनयश्चेति समाहारे छन्दोविशेषणम्। यतिस्थानत्वेन च तत्सङ्ख्याकाक्षररूपता विवक्षिता। दिङ्मुनिभिर्वंशपत्रपतितमिति एकं वा पदम्। यतिपदस्य मध्यमस्य लोपेन वा समासः। तत्र यतिस्थानमिति वाऽध्याहारः। दिङ्मुनियतीति पदेऽन्त्यपदलोप इति केचित्। लुप्तविभक्त्यन्तमित्यन्ये। तदुभयं चिन्त्यम्।

षट्सु चतुर्षु सप्तसु च त्रिषु स्थानेषु यतौ हरिणी नाम :: ९६ ::

## बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः 'जसौ जसयला' अर्थात् जगण, सगण, जगण, सगण लघु एवं गुरु हो तथा 'वसुग्रह' माने (वसु आठ, ग्रह-९) आठ एवं नव वर्ण पर यति हो तो पृथ्वी छन्द होता है ॥९४॥

जिस वृत्त के प्रति पाद में यदि क्रमशः भगण, रगण, नगण, भगण नगण एवं लघु गुरु इस प्रकार सत्रह वर्ण हों तथा दशः एवं सात वर्ण पर यति हो तो वह 'वंशपत्रपतित' छन्द होता है ॥९५॥

यदि क्रमशः न्सौ म्रौ स्लौ गो अर्थात् नगण, सगण, मगण, रगण, मगण, रगण, सगण, लघु एवं गुरु सत्रह वर्ण प्रत्येक पाद में हो तथा क्रमशः छ, चार, सात वर्ण पर यति हो तो वह हरिणी वृत्त होता है ॥९६॥

**मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरू चेत्॥९७॥**

**हयदशभिर्नजौ भजजलगुरु नर्कुटकम् ।९८॥**

**मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥९९॥**

सेतुः

नाम। दश सप्त च यतिस्थानम् ॥९५॥ रसेति। न स म र स लघु गुरुभिर्हरिणी नाम। षड्भिश्चतुर्भिःसप्तभिश्च यतिः ॥९६॥ मन्देति। म भ न ततैर्गुरुभ्याञ्च मन्दाक्रान्ता नाम। चतुर्भिः षड्भिः सप्तभिश्च यतिः ॥९७॥

नारायणी

म भ-न-त-त-ग-गैर्मन्दाक्रान्ता। जलधिषडगैश्चतुर्भिः पड्भिरगैः पर्वतैः सप्तभिः ॥ ९७ ॥

सप्तभिर्दशभिश्च यतिः ॥ ९८ ॥

मुनयः सप्त, गुहस्य 'स्कन्दस्य कानि मुखानि षट्, अर्णवाश्चत्वारस्तैः कृता यतिर्यत्र तन्नर्कुटकमेव कोकिलकं वद ब्रूहीति शिष्योपदेशः। यतिभेदेन तस्यैवान्या संज्ञेति ज्ञेयम् ॥ ९९ ॥

तथा—

बालक्रीड़ा

प्रतिपाद में सत्रह वर्ण वाले जिस वृत्त में क्रमशः मगण, भगण, नगण दो तगण और दो गुरु हो तथा चार, छः एवं सात वर्ण पर यति हो तो वह मन्दाक्रान्ता छन्द होता है ॥९७॥

जिस वृत्त के प्रत्येक पाद में क्रमशः नजौ भजजला गुरुनगण, अर्थात जगण, भगण दो जगण, लघु तथा गुरुहो तो वह नर्कुटक छन्द होता है ॥ ९८ ॥

यदि नर्कुटक वृत्त के ही प्रत्येक पाद में क्रमशः मुनि अर्थात् सात, गुहकार्णवै यानी छः एवं चार वर्ण पर यति हो तथा अन्य सब गणों की अवस्था पूर्ववत् हो तो वह कोकिलक छन्द होता है ॥९९॥

स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ॥१००॥

## सेतुः

हयेतिः। न ज भ ज ज लघु गुरुभिर्नर्कुटक नाम। सप्तभिर्दशभिश्च यतिः ।९८॥ मुनिगुहेति। सप्तभिर्गुहकैः स्कन्दशिरोभिः। कं शिरो जलमाख्यातम् धृत्याम् अष्टादशाक्षरपादे। स्यादिति। य त न य यैः कुसुमितलतावेल्लिता नाम। पञ्चभिः षड्भि सप्तभिश्च यतिः ॥९९॥ स्यादिति। म त

## नारायणी

रसयुगहययुङ्नौ म्रौ सौ लगौ हि यदा हरिः॥
यदिह नयुगलं ततो वेदरेफैर्महामालिका॥
पञ्चमकारकृताश्वगतिर्यदि चान्तसरचिता॥
सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः॥

तर्काः षड्।

वर्णाश्वैर्मननततमकैः कीर्तिता चित्रलेखेयम्॥

वर्णाश्चत्वारः।

माद्रननासौ भ्रमरपदकमिदमभिहितम्॥
शार्दूलं वद मासषट्कयति मः सौ जसौ रो मश्चेत्॥

मासा द्वादश।

अर्थाश्वाश्वैर्मैभनयरयुगैर्वृत्तं मतं केशरम्॥

अर्थाश्चत्वारः।

म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः।

अत्र वृत्तानि २६२१४४। १००॥

## बालक्रीड़ा

## अथ धृतिः

समवृत्त छन्दों का यह अट्ठारहवाँ भेद है। इस वृत्त के अन्तर्गत आने वाले छन्दों के प्रत्येक पाद में अट्ठारह वर्ण होते हैं।

जिस वृत्त के प्रतिपाद में क्रमशः यदि 'म्तो नयो यो' अर्थात् मगण, तगण, नगण और तीन यगण इस प्रकार अट्ठारह वर्ण हों तथा पाँच छः सात वर्ण पर यति हो तो वह कुसुमितलतावेल्लिता वृत्त होता है॥ १००॥

**सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥१०१॥**

## सेतुः

ख्यातमित्यभिधानम् । षड्भिरिति यावत् । चतुर्भिश्च यतिश्चेन्नर्कुटकमेव कोकिलं नाम । वदेति । शिष्योपदेशः ॥९९॥

धृत्यां अष्टादशाक्षरपादे स्यादिति मतनययय कुसुमलतावेल्लितानाम पंचभिः षड्भिः सप्तभिश्च यतिः ॥ १०० ॥ मादिति ।

## नारायणी

अथाऽतिधृतिः (१९)—

द्वादशभिः सप्तभिश्च यतिः ।

तथा—

नयुगललगुरु निरन्तरं यदा स पञ्चचामरः ॥
रसर्त्वश्वैर्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ॥
मताश्वाश्वान्तं मतनसरगैः कीर्तितं पुष्पदाम ॥
वृत्तं बिम्बाख्यं शरमुनितुरगैर्म्तौ न्सौ ततौ चेद् गुरुः ॥
इयं छाया ख्याता ऋतुरसहयैर्यो मनसा म्तौ गुरुः ॥
रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ॥
इनाश्वैर्यायमनयजजगाः कीर्तिता मणिमञ्जरी ॥
गजाब्धितुरगैर्जसौ जसतमा गश्चेत्समुद्रतता ॥
अत्र वृत्तानि ५२४२८८ ॥ १०१ ॥

## बालक्रीड़ा

### अथ अतिधृति

समवृत्त छन्दों का यह उन्नीसवाँ भेद है इसके अन्तर्गत आने वाले वृत्तों में वर्णों की संख्या प्रत्येक पाद में उन्नीस होती है ।

जिस वृत के प्रत्येक पाद में क्रमश 'मसजस्तता सगुरव.' अर्थात् मगण (SSS) सगण (IIS); जगण (ISI) सगण (IIS) तथा दो तगण (SSI) हों तथा 'सूर्याश्वै' यानी बारह एवं सात वर्ण पर यति हो तो वह शार्दूलविक्रीडित छन्द वृत्त होता है । १०१॥

**रसत्र्वश्वै र्म्यौ न्सौ–ररगुरुयुतौ-मेघविस्फूर्जिता स्यात्**
**(२०) ज्ञेया सप्ताश्वषड्भिर्मरभनय–**
**युता म्लौ गः सुवदना ॥१०२॥**

## सेतुः

म स ज ज म र हरिणप्लुतं नाम । अष्टभिः पञ्चभिश्च यतिः । यदिति । नाम्बां चतुर्भी रैश्च महामालिका नाम । पञ्चेति । पञ्चभिर्मैः सगणेन चाश्वगतिर्नाम ।

अतिधृत्याम् एकोनविंशत्यक्षरपादे न युगलेति । नाम्यामग्रे गुरुस्ततो लघुः पुनर्गुरुरित्येकोनविंशत्यक्षरैः पञ्चचामरो नाम रसेति । य म न स र र गुरुभिर्मेघविस्फूर्जिता नाम । षड्भिः २ सप्तभिश्च यतिः । सूर्येति । म स ज स त त गुरुभिः शार्दूलविक्रीडितं नाम । द्वादशभिः सप्तभिःश्च यतिः ॥१०१।

कृत्यां विंशत्यक्षरपादे । ज्ञेयेति । म र भ न य भ लघु गुरुभिः सुवदना नाम सप्तभिः २ षड्भिश्च यतिः ॥१०२॥ त्रिरिति । र ज

## नारायणी

अथ कृतिः ( २० )—

सप्तभिः सप्तभिः षड्भिश्च यतिः ॥ १०२ ॥

## बालक्रीड़ा

जिस वृत्त के प्रत्येक पाद में क्रमशः यगण, मगण, नगण, सगण, दो रगण एक गुरु हों तथा छः, छः एवं सात वर्ण पर यति हो तो वह मेघ-स्फूर्जिता वृत्त होता है।

### अथ कृतिः

समवृत्त छन्दों का यह बीसवाँ भेद है। इस वृत्त के अन्तर्गत आने वाले छन्दों के प्रत्येक पाद में वर्णों की संख्या बीस होती है।

जिस बीस वर्ण के प्रतिपाद वाले छन्द में क्रमशः प्रत्येक चरण में मगण,

**त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तं नाम ॥१०३॥**

**(२१) म्रभ्नैर्यानां त्रयेण त्रिमुनि–**

## सेतुः

र ज र ज गुरु लघु रूपेण लक्षणेन वृत्तं नाम । त्रिरिति सुजन्तं तेन त्रिवारं रगण जगण मित्यर्थः । संहितायां ढ्रलोप इति दीर्घः ॥१०३॥ प्रकृत्याम् एकविंशत्यक्षरपादे । म्रभ्नैरिति । म र भ न य य यैः

## नारायणी

त्रिवारं रगणजगणौ गुरुलघू चेदेतादृशेन लक्षणेन वृत्तं नाम । गुरु-लघुक्रमेणेत्यर्थः । अत्र पादान्ते यतिः । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( पा० सू० ६–३–१११ ) इति त्रिरित्यत्र दीर्घः ॥

तथा—

रसैश्वैरश्वैर्यमननततगैर्गेन शोभेयमुक्ता ॥

अत्र सङ्ख्या १०४८५७६ ॥ १०३ ॥

अथ प्रकृतिः ( २१ )—

म–र–भ–नै–र्यगणत्रयेण च स्रग्धरा त्रिवारं मुनिषु यतियुक्ता । सप्तसु सप्तसु सप्तसु यतिमतीत्यर्थः ।

## बालक्रीड़ा

रगण, मगण, नगण, यगण मगण लघु और गुरु हो तथा 'सप्ताश्वषड्भि' अर्थात् सात, सात और छः वर्ण पर पर यति हो तो वह वृत्त सुवदना होता है ॥ १०३ ॥

जिस बीस वर्ण वाले छन्द के प्रत्येक पाद में क्रमशः तीन बार रगण (ऽ।ऽ) जगण (।ऽ।) त्री रजौ गलौ अर्थात् रगण, जगण, रगण, जगण, रगण, जगण तथा गुरु लघु हों तो वह वृत्त नाम का छन्द होगा ॥ १०३ ॥

## अथ प्रकृति

यह समवृत्तों के भेदक्रम में इक्कीसवाँ वृत्त है इसके अन्तर्गत आने वाले वृत्तों के प्रत्येक पाद में २१ वर्ण होते हैं ।

यतियुतां स्रग्धरा कीर्तितेयम् ॥१०४॥
(२२) भ्रौ नरना रनावथ गुरुर्दिगर्क-
विरमं हि भद्रकमिति ॥१०५॥

सेतुः

स्रग्धरा नाम । त्रिवारं सप्तसु यतिः ॥१०४॥

आकृत्यां द्वाविंशत्यक्षर पादे भ्राविति । भ र न र न र न गुरुभिर्भद्रकं नाम । दशभिर्द्वादशभिश्च यतिः ॥१०५॥

अथ शक्वरी

नारायणी

तथा—

सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः ॥ अन्येषां मते सिद्धकमिति संज्ञितमेतत् ।

अत्र सङ्ख्या २०९७१५२ ॥ १०४ ॥

अथाकृतिः ( २२ )—

तथा —

सप्तभकारकृतावसिती सगुरुः कविभिः कथिता मदिरा ॥

बालक्रीड़ा

इक्कीस वर्णों वाले जिस वृत्त के प्रत्येक चरण में यदि क्रमशः म्रभ्नैर्यानां त्रयेण अर्थात् मगण (SSS); रगण (SIS) भगण (SII) नगण और तीन यगण (ISS) हो तथा प्रतिपाद में त्रिमुनि ( तीन, मुनि माने सात ) अर्थात् तीन बार सात-सात वर्ण पर यति हो तो वह स्रग्धरा वृत्त कहलाता है।१०४।

अथ आकृति

यह समवृत्तों के भेद क्रम में बाइसवां भेद है इसके अन्तर्गत आने वाले प्रत्येक वृत्त के प्रत्येक पाद में वाइस वर्ण होते है।

आकृति के अन्तर्गत आने वाले २२ वर्ण वृत्त के प्रत्येक पाद में क्रमशः यदि 'भ्रौ नरनौ रना गुरु' अर्थात् भगण, रगण, नगण, रगण नगण रगण

(२३) यदिह नजौ भजौ भजभलगा-
स्तदश्वललितं हरार्कयतिमत् ॥१०६॥
मत्ताक्रीडा मौ त्नौ नौ नलिगिति

## सेतुः

विकृत्यां त्रयोविंशत्यक्षर पादे यदिति । न ज भ ज भ ज भ लघुगुरुभि-रश्वललितं नाम । एकादशभिर्द्वादशभिश्च यतिः।१०६। मत्तेति । अष्टसु पञ्चदशसु च यतौ सत्यां म म त न न न न लघु गुरुभिर्मत्ताक्रीडा नाम । अत्र अष्टभिः पञ्चभिर्दशभिश्च यतिरिति व्याचक्षाणः सुल्लक्षणस्तु शरेति भिन्नं यतिस्थानमिति बभ्राम । यदाह सूत्रकारो मत्ताक्रीडा मौ त्नौ नौ न् लौ ग् वसु पञ्चदशकौ । अत्र हि वसुपञ्चदशकाविति द्विवचनान्तात् पञ्चदशसु

## नारायणी

अत्र वृत्तानिः ४१९४३०४ ॥ १०५ ॥

अथ विकृतिः (२२)—

हराः ११. अर्काः १२ ॥ १०६ ॥

## बालक्रीड़ा

नगण एवं गुरु हों दिक् (दस दिशाएं) अर्थात् दश तथा बारह पर यति हो तो वह भद्रक वृत्त होता है । १०५ ।

## अथ विकृति

समवृत्तों के क्रम में विकृति तेईसवां भेद है इसके अन्तर्गत आने वाले वृत्तों के प्रत्येक चरण के प्रत्येक पाद में तेईस वर्ण होते हैं ।

जिस वृत्त के प्रत्येक पाद में क्रमशः नगण जगण भगण जगण भगण जगण भगण लघु एवं गुरु हो यानी नजौ भजौ भजभलगा' हो तथा हरार्कयति हर माने शिव एकादश, अर्क माने सूर्य बारह अर्थात् ग्यारह एवं बारह अक्षरों पर यति हो तो वह अश्वललित छन्द होता है । १०६ ।

भवति वसुशरदशयतियुता ।।१०७।।

(२४) भूतमुनीनैर्यतिरिह भतनाः स्भौ

### सेतु

यतिः । एतत्सूत्रविरोधादेव मत्ताक्रीडमिति नपुंसकपाठोऽपि तदुक्तः प्रत्युक्तः ।

संकृत्यां चतुर्विंशत्यक्षरपादे भूतेति । भ त न स भ भ न येतस्न्वी नाम । भूतानि पञ्च तत्संकलिता मुनयो द्वादश भवन्ति तैर्यतिः इनैः सूर्यैः

### नारायणी

वसवोऽष्टौ पञ्चदश च तेषु यतिमती । अष्टमे पञ्चदशे च वर्णे यतिः कार्येत्यर्थः । न तु पञ्चसु दशसु चेत्यर्थः । "मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ" ( पिं० सू० ७-२८ ) इति सूत्रे द्विवचननिर्देशात् । अन्यथा हि बहुवचनं स्यात् । अन्यैस्तु वाजिवाहनमेतदुक्तम् ।।

अत्र सङ्ख्या ८३८८६०८ ।। १०७ ।।

अथ सङ्कृतिः ( २४ )

भूतानि पञ्च, मुनयः सप्त, इनाः सूर्या द्वादश । अत्र पैङ्गले द्वादशसु द्वादशसु च यतिरुक्ता ।।

### बालक्रीड़ा

जिस वृत्त में प्रत्येक पाद में क्रमशः दो मगण, एक तगण, चार नगण एक लघु एवं गुरु ऐसे २३ वर्ण हों तथा आठ एवं पन्द्रह वर्ण पर यति हो तो वह मत्ताक्रीडा छन्द होता है । १०७ ।

### अथ संकृति

समवृत्तों के क्रम में संकृति चौबीसवां भेद है इसके अन्तर्गत आने वाले वृत्तों के प्रत्येक पाद में २४ वर्ण होते हैं ।

जिस वृत्त के प्रत्येक पाद में क्रमशः भगण, तगण, नगण सगण, भगण

**भनयाश्च यदि भवति तन्वी ॥१०८॥**

**(२५) क्रौञ्चपदा भ्मौ स्भौ ननना न्गा-**
**विषुशरवसुमुनिविरतिरिह भवेत् ॥१०९॥**

## सेतुः

पुनः द्वादशभिर्यतिरित्यर्थः। यत्तु पञ्चभिः सप्तभिर्द्वादशभिश्चेति-सुल्लक्षणादयो व्याचख्युः तत्सूत्रविरुद्ध तथाच सूत्रं[1] तन्वी भ्तौ न्सौ भौ न्यौ द्विरादित्या इति।

अतिकृत्यां पञ्चविंशत्यक्षरपादे क्रौञ्चेति। भ म स भ न न न न

## नारायणी

अत्र सङ्ख्या १६७७७२१६ ॥

अथाऽतिकृतिः ( २५ )—

इषव पञ्च, शराः पञ्च, वसवोऽष्टौ, मुनयः सप्त। एतेषु विरतिर्यस्याः सा तथा।

अत्र सङ्ख्या ३३५५४४३२ ॥

## बालक्रीड़ा

नगण और यगण हो तथा (भूत) पाँच (मुनि) सात (इन) बारह वर्ण पर यति हो तो वह तन्वी वृत्त होता है ॥१०८॥

## अथ अतिकृति

अतिकृति समवृत का पच्चीसवाँ भेद है इसके अन्तर्गत आने वाले

---

टि० (१) अत्र सूत्रे द्विरादित्या इत्युल्लेखः किमाधारः। पिङ्गलसूत्रे तु तन्वी भ्तौ न्सौ भ्मौ न्याविन्द्रियस्वरमासाः इति ॥२८॥ तेन इन्द्रियेषु पञ्चसु स्वरेषु सप्तसु मासेषु द्वादशसु च यतिः। अत आधारशून्यः सेतूद्धृतः पाठः। सूत्रविरोधोल्लेखात्सेतुकारो नादानो बभ्राम। इति।

(२६) वस्वीशाश्वच्छेदोपेतं समतनयुगनर-
सलगैर्भुजङ्गविजृम्भितम् ।।११०।।
मो नाः षट् सगगिति यदि

सेतुः

गुरुभिः क्रौञ्चपदा नाम । पञ्चभिः र अष्टभिः सप्तभिश्च यतिः

उत्कृत्यां षड्विंशत्यक्षरपादे वस्वेति । म म त न न न र स लघुगुरुभिर्भुजङ्गविजृम्भितं नाम । अष्टभिरेकादशभिः सप्तभिश्च यतिः । म इति । मगणेन षड्भिर्नगणैः सगणेन गुरुभ्याञ्च अपवाहाख्यं नाम । नवसु

नारायणी

अथोत्कृतिः ( २६ )—

वसवः ८, ईशाः ११, अश्वाः सप्त । एतैश्छेदेन यत्या युक्तम् ।। ११० ।।

मो मगणः, षट् नाः नगणः सगणः गो गुरुः पुनर्गुरुश्च नवभिः मः पुनः

बालक्रीडा

वृत्तों के प्रत्येक पाद में २५ वर्ण होते हैं ।

पच्चीस वर्ण वाले छन्द के प्रत्येक पाद में यदि क्रमशः भ्मौ स्मौ भगण मगण सगण भगण चार नगण और एक गुरु हो तो वह क्रौञ्चपदा छन्द होता है इसमें पाँच, पाँच आठ और सात वर्णों पर यति होती है ।।१०९।।

अथ उत्कृति

उत्कृति समवृत्तों का छब्बीसवाँ भेद है इसके अन्तर्गत आने वाले वृत्तों के प्रत्येक पाद में २६ वर्ण होते हैं ।

२६ वर्णों वाले वृत्त के अन्तर्गत आले वाले 'भुजङ्गविजृम्भित' छन्द के प्रत्येक पाद में क्रमशः ममतनयुगनरसल दो मगण, एक तगण तीन नगण, रगण, सगण लघु गुरु होते हैं तथा आठ ग्यारह सात वर्ण पर यति होती है ।११०।

२६ वर्णों वाले वृत्त के अन्तर्गत आनेवाले छन्द के प्रत्येक पाद में

**नवरसरसशरयतियुतमपवाहाख्यम् ॥१११॥**

**यदि ह नयुगलं ततः सप्तरेफा**

**स्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥११२॥**

सेतुः

षट्सु षट्सु पञ्चसु च यतिः। इत्युक्तादिषड्विंशतिभेदाः।

अथ दण्डकानाह यदिहेति। नगणाभ्यां सप्तभी रगणैश्चण्डवृष्टि प्रपातो नाम दण्डको भवेत्। दण्डकानाममि समवृत्तत्वादेकेनैव पादेन लक्षितोऽयम्। प्रतिचरणेति। प्रतिदण्डकचरणेषु विवृद्धै रगणैरर्णदयो

नारायणी

षड्भिपञ्चभिश्च यत्या युतमपवाहकसंज्ञम् ॥

अत्र वृत्तसङ्ख्या ६७१०८८६४ ॥ १११

**इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकाया-**

**मुक्तादिप्रकरणम्।**

इदानीं समवृत्तप्रसङ्गेन समवृत्तरूपान्दण्डकानाह—

यदीति यदेत्यर्थेऽव्ययम्। हेति प्रसिद्धार्थेऽव्ययं वा। नयुगलं नगणद्वयं ततस्तदनन्तरं सप्त रगणाः, स चण्डवृष्टिप्रपातो नाम दण्डकः। इदमेवोदाहरणं पादे। इयं च संज्ञा रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमतेन। ताभ्यां त्वेतस्य संज्ञान्तरमकारि ॥ ११२ ॥

बालक्रीड़ा

मगण, छ नगण, सगण दो गुरु इस क्रम में हों तथा नव रस रस शर यति अर्थात् नौ, छः छः (शर) पाँच पर यति हो तो वह अपवाह वृत्त होता है ॥१११॥

इस प्रकार उक्तादि प्रकरण समाप्त हुआ।

अब दण्ड प्रकरण का आरम्भ करते हैं। दण्डक का अर्थ खण्ड

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-
व्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥११३॥

सेतुः

दण्डका ज्ञेयाः । अत्रायं मामकः सङ्ग्रहः ।

चण्डवृष्टिप्रपाताख्यो दण्डको नगणद्वयात् ।
रगणैः सप्तसंख्यैः स्यादर्णस्त्वष्टभिरुच्यते ॥१॥
अर्णवो नवभिर्ज्ञेयो व्यालस्तु दशभिर्भवेत् ।

नारायणी

यद्यपि प्रतिचरणं विवृद्धो रेफो रगणो येषु ते तथेति व्युत्पत्त्या प्रथमे पादे नौ ततोऽष्टौ रेफाः, द्वितीये नव, तृतीये दश, चतुर्थे एकादशेति वृद्धिरित्यर्थः प्रतीयते, तथापि ग्रन्थान्तरविरोधात्प्रतिदण्डकं चरणेषु विवृद्धा रेफा येष्विति विग्रहेणोत्तरोत्तरदण्डकेषु चरणचतुष्टयेऽप्येकैक-रेफवृद्धिरित्यर्थाश्रयणेन ग्रन्थान्तराऽविरोधः कार्यः। ततश्च नाभ्यां रग-णाष्टकेन च घटितपादोऽर्णाख्यो दण्डकः, रगणनवकेनाऽर्णवः, दशभि-र्व्यालः, एकादशभिर्जीमूतः, द्वादशभिर्लीलाकरः, त्रयोदशभिरुद्दामः, चतुर्दशभिः शङ्खः। सर्वत्रादौ नगणद्वयं कार्यम् । आदिशब्दात्पञ्चदशा-दिरगणैराराम---सङ्ग्राम--सुराम—वैकुण्ठ—सोत्कण्ठ—सार-कासार – वि-

बालक्रीड़ा

रहित पाद होता है ।

जिस वृत्त के पाद में क्रमशः 'न युगलं सप्तरेफा' माने दो नगण के बाद सात रगण हों तो वह चण्डवृष्टिप्रपात दण्डक छन्द होता है। इसके पदान्त में यति होती है ॥११२॥

२७ वर्ण वाले दो नगण + सात रगण के चणवृष्टिप्रपात छन्द में हीं 'प्रतिचरणविवृद्धरेफा' मानो चरण में एक-एक रगण और बढ़ा देने पर यानी कुल आठ, नौ, दस आदि रगण कर देने पर; यह ३०, ३३,

## सेतुः

जीमूत एकादशभिः सूर्यैर्लीलाकरो भवेत् ॥२॥
त्रयोदशभिरुद्दामः शंखनामा ततः स्मृतः ।
स चतुर्दशभिर्ज्ञेयस्ततः पञ्चदशादिभिः ॥३॥
आगमाद्यास्तु विज्ञेया दण्डका रगणैर्युताः ।
आद्यद्वयोदाहरणे एषां मूले प्रदर्शिते ॥ः॥
अर्णादिदण्डकानां सरलरीत्या ज्ञानार्थं कोष्ठकम् ।

## नारायणो

स्तार--संहार--नीहार--मन्दार--केदार--साधार-सत्कार—संस्कार—माकन्द-गोविन्द—सानन्द—सन्दोह—नन्देत्येवमादिनामका एकैकरगणवृद्धया नद्व-योत्तरैकत्रिंशदधिकशतत्रयरगणघटितैकोनसहस्राक्षरपादपर्यन्तं कविप्रयोगा-नुसारेण दण्डका ज्ञेयाः । यदाहुः—

एकोनसहस्राक्षरपर्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः ।
वर्णत्रिकगणवृद्धया नद्वितयाद्या महामतिभिः ॥ इति ।

तथा च रगणघटितदण्डकाः पञ्चविंशत्यधिकशतत्रय (३२५) सङ्ख्याका भवन्ति । एवं यगणादिघटितदण्डका अपि । तत्र रीतिप्रदर्शनायोदाहरण ममैष यथा—

त्रिभुवनसुखहेतवे धातृमुख्यामरप्रार्थनासार्थनादर्थिचिन्तामणे !
दशरथकृतयागसौभाग्यतस्तत्तनूजन्मतास्थापितश्रौतमार्गार्गल ! ॥

## बालक्रीड़ा

३६ वर्णों के पाद वाला छन्द अर्ण, अर्णव व्याल आदि दण्डक होता है ॥११३॥

इसी प्रकार दो नगण और सात यगण वाला दण्डक प्रचितक कहलाता है तथा उपरोक्त रगण की तरह इसमें यगण को बढ़ाते जाने पर यानी प्रचितक में क्रमशः यगण बढ़ाते जाने पर अन्य दण्डक बन जाते हैं। इसकी तरह अन्य गणों से भी दण्डक बने हैं ॥११४॥

**प्रचितकसमभिधो धीरधीभिः स्मृतो-**
**दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ।।११४।।**

नारायणी

मुनिवनगतताटकाकण्टकोन्मूलकुद्दालितस्वीयबाणावले ! राघव !
कुशिकयजनसिद्धये व्योम कृत्वा शरैश्चण्ड वृष्टिप्रपातोऽसि हन्तुं रिपून् ।।
एवमर्णादिष्वप्युदाहार्यम् ।। ११३ ।।

नगणद्वयादुत्तरभाविभिः सप्तभिर्यगणैर्धीरबुद्धिभिः कविभिः प्रचितकसंज्ञको दण्डक उक्तः । प्रचितक इति समभिधा नाम यस्येति विग्रहः ! अत्रापि पूर्ववदेकैकयगणवृद्ध्या दण्डकाः कार्याः । यैरित्युपलक्षणम् । अष्टभिरपि गणैः कविप्रयोगानुरोधाद्भोगावलीबिरुदावल्यादिषु दण्डकानामिष्टत्वात् यद्यपि 'शेषः प्रचितः' (पिं० सू० ७--३६) इति सूत्र वृत्तिकृता रेफाष्टकादिरचितदण्डकपरं शेषशब्दमङ्गीकृत्य रगणघटितानामेव चण्डवृष्टिप्रपातोर्ध्वभाविनां 'प्रचित' इति सामान्यसंज्ञाभिधानार्थतया व्याख्यातम । अत एव चाह सः—

प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः पिङ्गलाचार्यनाम्नो मतः, प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरेफाभिवृद्ध्या यथेष्टं भवेत् ।। स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काममन्येऽपि कुर्वन्तु वागीश्वराः भवति यदि समानसङ्ख्याक्षरैस्तत्र पादव्यवस्था ततो दण्डकः पूज्यतेऽसौ जनैः ।। इति

तथापि यगणादिदण्डकानामपि कविप्रयुक्तत्वादुक्तरगणरचितदण्डकव्यतिरिक्तयादिकृतदण्डकानामेव शेषशब्दोद्दिष्टानां प्रचितकसंज्ञा ज्ञापनार्थतां सूत्रस्याभिप्रेत्य व्याख्यात्रन्तरकृतव्याख्यामनुसरतैवमवादि केदारेणेत्यदोषः । सर्वेषु दण्डकेषु पदान्ते यतिः । श्रुतिसौकर्येण अन्येऽपि दण्डका अन्यैरुक्ताः । यथा—

नयुगलगुरुयुगावेवं प्रकाराः कवीच्छानुरोधात्तदा यत्र

सेतुः

| दण्डकानां नाम | अर्ण | अर्णव | व्याल | जीमूत |
|---|---|---|---|---|
| लक्षणम् | २ नगण ८ रगण | २ नगण ९ रगण | २ नगण १० रगण | २ नगण ११ रगण |
| नाम | लीलाकर | उद्दाम | शंख | आगम |
| लक्षणम् | २ नगण १२ रगण | २ नगण १३ रगण | २ नगण १४ रगण | २ नगण १५ रगण |
| नाम | प्रचितक | ,, | ,, | ,, |
| लक्षणम् | २ नगण ७ यगण | २ नगण ८ यगण | २ नगण ९ यगण | २ नगण १० यगण |
| नाम | प्रचितक | ,, | ,, | ,, |
| लक्षणम् | २ नगण ११ यगण | २ नगण १२ यगण | २ नगण १३ यगण | २ नगण १४ यगण |

अर्णवो यथा मत्कृत जसवंतभास्करे—नरवरजसवंतसिंहस्य बुन्देल-खण्डचूडामणेः शौर्यनीरार्णवं बाहुमासाद्य । चचद्द्युतिगंगनकरवालकाल-स्वरूपाम्बुदः । पूरितारातिसामन्तश्रीमन्तिनीनेत्रनीरावगः । रिपुशशधरकीर्ति विस्फुरत्कौमुदीं मवृणोति स्वयं स्वर्णसन्तुष्टि सौदामिनी मण्डनः । कल-यति चपलमूषप्रतापालिदावानल ज्वालपादत्वमानं जगच्छीतलं धारया ॥१॥ एवं व्यालादयोऽपि स्वयमुदाहरणीयाः ।

प्रचितेति । नगणद्वयात् सप्तभिर्यगणैः प्रचितकोनाम दण्डकः । प्रचि-तक इति समभिधा नाम यस्य स इति विग्रहः । उदाहरणन्तु एतदेव । यैरिति अन्येषामपि गणानामुपलक्षणं कविप्रयोगात्तद् घटितानामपि दण्ड-कानामिष्टत्वात् । अत्र चण्डवष्टयादाविव गणवृद्धया दण्डकभेदा ज्ञेयाः । अनुक्तनाम्नां दण्डकानां प्रचित इत्येव संज्ञा । तदुक्तं सूत्रकारेण शेषः प्रचित इति । श्रीमदग्निहोत्रिकुलतिलकायमानश्रीमदापाजिभट्टसूनु भास्कर-भट्ट विरचितवृत्त रत्नाकरसेतौ तृतीयोऽध्यायः समाप्तः ॥३॥

## नारायणी

वक्ष्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा ॥
यत्र रेफान्कविः स्वेच्छया पाठसौभाग्यसापेक्षया—
रोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः ॥

लघुगुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया
स दण्डकस्त्वनङ्गशेखरः स्मृतः ॥

स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः
कविः स दण्डकः स्मृतो जगत्यशोकमञ्जरी ॥

सगणः सकलः खलु यत्र भवेत्तमिह
प्रवदन्ति बुधाः कुसुमस्तबकम् ॥

यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो
विशुद्धोऽपरो दण्डकः सिंहविक्रान्तनामा ॥

एवं मेघमालाकुसुमस्तरणोत्तारकामबाणादयो दण्डकाः षड्विंशत्यक्षराधिकाक्षरपादाः कविप्रबन्धानुसारेण ज्ञेयाः। षड्विंशत्यक्षरन्यूनतायां तु पूर्वोक्तासु जातिष्वेवान्तर्भावो यथायोगं भवति ॥ ११४ ॥

## इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां समवृत्ताध्यायस्तृतीयः ॥

### बालक्रीड़ा

इस प्रकार वृत्तरत्नाकर के तृतीय अध्याय की आचार्य मधुसूदन शास्त्री की कृति हिन्दीटीका बालक्रीड़ा समाप्त हुई।



॥ श्री ॥

# अथ चतुर्थोऽध्यायः

विषमे यदि सौ सलगा दले
भौ युजि भाद् गुरुकावुपचित्रम् ॥ १ ॥

## सेतुः

अथ अर्द्धसमवृत्तान्वह–विषमे इति । प्रथमतृतीयरूपे विषमपादे स स स लघुगुरवः । समे द्वितीयचतुर्थरूपेतु त्रयो भगणा द्वौ गुरू चेत्तादुपचित्रं नाम । अर्द्धसमत्वादर्द्धमुदाहृतम् । एवमुत्तरत्रापि । भत्रयमिति । विषमे त्रिभिर्भगणै-र्गुरुभ्याञ्च समे न ज ज यैर्द्रुतमध्या नाम । सयुगादिति । विषमे त्रिभिः सग॰

## नारायणी

एवं समवृत्तान्यभिधायाऽधुना अर्धसमान्याह—

विषमे दले प्रथमे तृतीये च पादे सौ सगणद्वयं सलगाश्च सगणलघुगुरवः, युजि समे द्वितीये चतुर्थे च पादे भौ भगणौ पुनर्भगणस्ततो द्वौ गुरू तदोपचित्रं नाम । अर्धसमत्वाद् द्वितीयार्धमप्येवमेवोदाहार्यम् । एवमग्रेऽपि ॥१॥

## बालक्रीड़ा

वृतरत्नाकर में चौथे अध्याय का आरम्भ करते हैं ।

उपचित्र—जिस छन्द के विषम यानी प्रथम-तृतीय पाद में सौ सलगा माने दो सगण और एक सगण यानी तीन सगण ( । । ऽ ) के बाद एक लघु और एक गुरु हो एवं सम द्वितीय चतुर्थ पाद में भौ भाद् तीन भगण ( ऽ । । ) के बाद दो गुरु हों तो वह छन्द उपचित्र कहलाता है ॥१॥

भत्रयमोजगतं गुरुणी चे-

द्युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २ ॥

सयुगात्सगुरू विषमे चे-

द्भाविह वेगवती युजि भाद्गौ ॥ ३ ॥

ओजे तपरौ जरौ गुरुश्चे-

### सेतुः

णैगुरुभ्याञ्च समे त्रिभिर्भगणैं गुरुभ्याञ्च वेगवती नाम । ओज इति। विषमे त ज र गुरुभिः। समे म स जैगुं रुभ्याञ्च भद्रविराट् नाम। असम इति। विषमे

### नारायणी

ओजगतं विषमपादगतं भगणत्रयं गुरुणी चेद् द्वे अक्षरे, युजि समपादे ज-य-गणपरौ-नगणजगणौ चेत्तदा द्रुतमध्या नाम । उपचित्राऽऽपातलिकाऽपरान्तिकेयम् । अत्रापरान्तिकासंनिवेशो भ्रान्तः ॥२॥

विषमे पादे सत्रयं गुरुश्च, युजि समे पादे भगणत्रयं गुरू च, इह छन्दःशास्त्रे वेगवती नाम, आपातलिकैवेयम् ॥३॥

ओजे विषमे पादे तगणात्परौ जगणरगणौ गुरुश्च, अनोजेऽविषमे

### बालक्रीड़ा

द्रुतमध्या—जिस वृत्त के प्रथम-तृतीय पाद में भत्रय तीन भगण और दो गुरु हो और द्वितीय-चतुर्थ पाद में नजौ एक नगण दो जगण और एक यगण हों तो वह द्रुतमध्या वृत्त कहलाता है ॥२॥

वेगवती—जिस वृत्त के प्रथम-तृतीय पाद में सयुगात्स माने तीन सगण ।।ऽ के बाद एक गुरु हो और द्वितीय-चतुर्थ पाद में भौ भाद् तीन भगण के बाद द्वौ गौ दो गुरु हों तो वह वृत्त वेगवती होता है ॥३॥

भद्रविराट्—जिस वृत्त के प्रथम-तृतीय पाद में यदि तपरौ जरौ

न्म्सौ ज्गौग्भद्रविराड् भवेदनोजे ।। ४ ।।
असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः।।५।।
आख्यानकी तौ जगुरू ग ओजे

सेतुः

स ज स गुरुभिः । समे भ र नैर्गुरुभ्याञ्च केतुमती नाम । आख्यानकीति ।
यदा विषमे द्वौ तगणौ जगणौ गुरू च । समे ज त ज गुरवो गुरुश्च तदाख्यानकी

नारायणी

असमे न म-स-ज-ग-गुरुश्च भद्रविराड् भवेत् । औपच्छन्दसिकस्यैवेयं गणं-निवेशविशेषे संज्ञा ।।४।।

विषमे दले पादे सजसा गणा गुरुश्च, समे भरना गणा गुरू च केतुमती नाम । भरनगादिति समाहारैकवचनम् ।।५।।

तौ तगणो जगणगुरू गुरुश्चोजे विषमे पादे, अनोजे समे पादे जतौ

बालक्रीडा

माने क्रमशः तगण (ऽऽ।) के बाद जगण (।ऽ।) और रगण (ऽ।ऽ) एवं एक गुरु हो तथा द्वितीय चतुर्थ पाद में म्सौ ज्गौ मगण (ऽऽऽ) सगण (।।ऽ) जगण (।ऽ।) और दो गुरु हों तो उसे भद्रविराट् वृत्त कहते हैं ।।४।।

केतुमती—जिस वृत्त के असम प्रथम-तृतीय पाद में यदि क्रमशः सजौस, सगण (।।ऽ) जगण (।ऽ।) सगणं (।।ऽ) और एक गुरु हो एवं सम द्वितीय चतुर्थ पाद में भरनगाद् गः क्रमशः भगण (ऽ।।) रगण (ऽ।ऽ) नगण (।।।) दो गुरु हों तो उसे उसे केतुमती वृत्त कहते हैं ।।५।।

आख्यानकी—जिस वृत्त के प्रथम-तृतीय पाद में यदि तौ जगुरु माने

**जतावनोजे जगुरू गुरुश्चेत् ॥ ६ ॥**
**जतौ जगौ गो विषमे समे चे-**
**त्तौ ज्गौ ग एषा विपरीतपूर्वा ॥ ७ ॥**
**सयुगात्सलघू विषमे गुरु—**

सेतुः

नाम । जताविति । विषमे ज त ज गुरुभिर्गुरुणा च समे तत्रगुरुभिर्गुरुणास्च विपरीताख्यानकी नाम । सयुगादिति । विषमे त्रिभिः सगणैर्लघुगुरुभ्याञ्च । समे न भ भ रैर्हरिणप्लुता नाम । अयुजीति । विषमे न न र लघुगुरुभिः ।

नारायणी

ज-गगुरवस्तदाख्यानकी नाम ॥६॥

विषमे ज-त-ज-गगुरवः, समे त-त-ज-गगुरवस्तदैषा आख्यानकी विपरीतशब्दपूर्वा । विपरीताख्यानकीत्यर्थः । अनयोरुपजात्यन्तर्भावेऽपि विशेषसंज्ञाविधानार्थमत्र अर्धसमवृत्ताध्याये पाठः ॥ ७ ॥

सगणद्वयात्सगणलघू गुरुश्च विषमपादे, युजि समे पादे न भ-भ-रा

बालक्रीड़ा

दो तगण ( ऽऽ। ) एक जगण ( ।ऽ। ) दो गुरु हों एवं द्वितीय-चतुर्थ पाद में दो जगण ( ।ऽ। ), एक दो गुरु हों तो वह आख्यानकी वृत्त होता है ॥६॥

विपरीत आख्यानकी—जिस वृत्त के प्रथम-तृतीय पाद में यदि जतौ जगण तगण जगण व दो गुरु हों एवं द्वितीय चतुर्थ पाद में जगौ तौ ज्गौ ग माने दो तगण ( ऽऽ। ) एक जगण ( ।ऽ। ) एवं दो गुरु हों तो वह विपरीताख्यानकी वृत्त होता है ॥७॥

हरिणप्लुता—जिस वृत्त के प्रथम-तृतीय पाद में यदि सयुगात्सलघू

**युजि नभौ भरकौ हरिणप्लुता ॥ ८ ॥**
**अयुजि ननरला गुरुः समे—**
**न्जमपरवक्त्रमिदं ततो जरौ ॥ ९ ॥**
**अयुजि नयुगरेफतो यकारो**

सेतुः

समे न ज ज रैरपरवक्त्रं नाम । अयुजीति । विषमे न न रयैः । समे न ज

## नारायणी

हरिणप्लुता नाम ॥ ८ ॥

विषमे न-न-न-र-लगुरवः, समे न ज-ज-रा-अपरवक्त्रं नाम । अस्य वैतालीयान्तर्गतत्वेऽपि संज्ञान्तरविधानार्थमत्रोक्तिः ॥ ९ ॥

विषमे नयुगरेफयकाराः, युजि समे न-ज-ज-र-गुरवस्तदा पुष्पिताग्रा

## बालक्रीडा

माने तीन सगण एक लघु एवं एक गुरु हो तथा द्वितीय चतुर्थ पाद में क्रमशः एक नगण, ( । । । ) दो भगण, ( ऽ । । ) एक रगण ( ऽ । ऽ ) हो तो उसे हरिणप्लुता वृत्त कहते हैं ॥८॥

अपरवक्त्र—अयुजि यानी जिस वृत्त के विषम - प्रथम-तृतीय पाद में यदि क्रमशः दो नगण ( । । । ) एक रगण ( ऽ । ऽ ) और लघु गुरु हों तथा सम द्वितीय चतुर्थ पाद में एक नगण ( । । । ) दो जगण ( । ऽ । ) एवं एक रगण हो तो वह अपरवक्त्र वृत्त होता है ॥९॥

पुष्पिताग्रा—जिस वृत्त के प्रथम-तृतीय पाद में क्रमशः नयुगरेफतो यकारो माने दो नगण के बाद रगण और यगण हों तथा द्वितीय चतुर्थ

युजि च नजौ जरगाश्च पुष्पिताग्रा ।। १० ।।
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ।११।
विषमे ससजा गुरुः समे चेत् सभरा यश्च वसन्तमालिका

सेतुः

ज र गुरुभिः पुष्पिताग्रा नाम । वदन्तीति । अपरवक्त्रस्य वैतालीयमिति सामान्यसंज्ञामेव पण्डिता आहुः । तल्लक्षणाक्रान्तत्वात् । एव पुष्पिता-

नारायणी

नाम । इयमप्यौपच्छन्दसिकान्तर्भूतैव विशेषसंज्ञार्थमिहोक्ता ।। १० ।।

विपश्चितः – पण्डिता अपरवक्त्राख्यं वैतालीयमेवेद वदन्ति । पुष्पिताग्राभिधं छन्द औपच्छन्दसिकमेव केचिदाहुः । इद स्वस्यापि सम्मतम् । भावस्तूक्त एव ।। ११ ।।

विषमपादे र-ज-र-याः, समे ज-र-ज-र-गाः, यवाद्यवशब्दात्परा मती यवमतीत्यर्थः ।

तथा—

सौ लगौ विषमे यदि, सजजा गुरुर्ललिता समे ।।

बालक्रीड़ा

पाद में नजौ एक नगण ( ।।। ) दो जगण ( ।ऽ। ) एक रगण एवं गुरु हो तो वह पुष्पिताग्रा वृत्त होता है ।।१०।।

वैतालीय एवं औपच्छन्दसिक–विपश्चित् माने कोई विद्वान्, विशेष प्रकार से देखनेवाले लोग अपरवक्त्र छंद को वैतालीय एवं पुष्पिताग्रा को औपच्छन्दसिक छन्द कहते हैं ।।११।।

यवमती जिस वृत्त के विषम यानी प्रथम-तृतीय पाद में क्रमशः रजौ

**स्यादयुग्मके रजौ रजौ समे तु–**
**जरौ जरौ गुरुर्यवात्परा मतीयम् ॥ १२ ॥**

**इति श्रीमद्भट्टकेदारविरचिते वृत्तरत्नाकरे**
**चतुर्थोऽध्यायः समाप्तः ।**

सेतुः

ग्राया औपच्छन्दसिकसंज्ञां केचित्पण्डिता आहुरित्यर्थः । विषमे इति । विषमे सगणद्वयं जगणो गुरू च । समे स भ र यगणा यस्याः सा वसन्त-गमालिका नाम । स्यादिति । विषमे र ज र य (१) युता । समे ज र ज र

नारायणी

ओजे तपरौ भरौ जरौ गुरू समे जौ यौ,
कीर्तिता बुधैरियं तु षट्पदाख्या ॥
रो जरौ जसंयुतौ पदे पदेऽथ युग्मे तरौ जरौ गुरुर्मृगी यवानी ॥
अयुजि ननभभाः समकेऽपि तु, नयुगरयुगलं तदा कौमुदी ॥
यदि विषमे भवतो नजौ जरौ, सजयाः समे जगुरू मञ्जुसौरभम् ।

तथाऽष्टाविंशतिर्लघव एको गुरुरिति विषमः पादः, त्रिंशल्लघव एको गुरुश्चेति समः सा शिखा नाम । इयमेव विपर्यस्तपादा खञ्जा नाम ।

बालक्रीड़ा

माने रगण ( ऽ । ऽ ) जगण ( । ऽ । ) रगण, जगण हो एवं सम यानी द्वितीय चतुर्थ पाद में विषम के विपरीत माने जगण रगण जगण रगण

---

टि. (१) सेतुकारो नादानोऽत एव बभ्रामात्र रजवित्यस्य स्थाने रयौ इति लिखन् । यतः—स्यादयुग् (रगण) मकेर (जगण) जौ रजौ (रगण) समे तु (जगण) ॥ जरैज (जगण) रौ गुरु (रगण) यावात्प

## सेतुः

गुरु युता यवात् यवशब्दात् परा मती यवमती नाम्नी भवेदित्यर्थः। यत्त्वस्या अमरावतीति नामेति सुल्लक्षणस्तत्र मूलं चिन्त्यम्। यदपि स्यादित्यस्य भवतीति व्याख्यानं तेनाकारि तदपि निर्मूलम्। लिङोर्विध्यर्थकत्वेन वर्त्तमानार्थद्योतकताया अभावात्। न हि स्यादित्यस्य विभक्तिप्रतिरूपकतायां।

---

टि. (जगण) रामती (रगण) यम् (गुरु) एव यदा ग्रन्थकारोऽय केदारो लक्ष्यसमन्वितं लक्षणं जगाद तदा रयौ इति कुत्रास्ति। यदयं तल्लिलेखेति।

> स कः सर्षपमात्राणि परच्छिद्राणि पश्यति।
> आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति।

सुल्लक्षणादीन् दूषयाञ्चकार यः। अन्यच्च सर्वैः छन्दोविद्भिरादृतं ललितेति वियोगिनीति सुन्दरीति च व्यवह्रियमाणं छन्दः परितत्याज। तद्यथा किराते २ सर्गे।

विहितां प्रियया मनः प्रियामथ निश्चित्य गिरं गरीयसोमित्यत्र "ससजा विषमे यदा गुरुः सभराः स्याल्ललिता समे लगौ" इति लक्षणकं ललिता छन्दो विराजते।

रघौ ८ सर्गे—

"अथ तस्य विवाहकौतुके ललितं बिभ्रत एव पार्थिव" इत्यत्र विषमे ससजाः समे गुरुः सभरा लोऽथ गुर्वियोगिनीति लक्षणकं वियोगिनी छन्दः समेधते।

नैषधे २ सर्गे—

"अधिगत्य जगत्य धीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः" इत्यत्र "अयुजोर्यदि सौ जगौ युगोः सभरा ला यदि सुन्दरी तदा" लक्षणकं सुन्दरीछन्दः क्रीडति। इति व्यवह्रियमाणं परितत्याज। अतो विलक्षणोऽर्थाद्विरुद्ध लक्षणो विगतलक्षणश्चाऽयं सेतुकारः।

सेतुः

भवतीत्येनदर्थं काव्ययत्वे प्रमाणमस्तीति प्रपञ्चितं पाणिनीयपरिभाषा भास्करे ऽस्माभिः ।

इति श्रीमदाग्निहोत्रि कुलतिलकायमानश्रीमदापाजिभट्टसूनुभास्करभट्ट विरचिते वृत्तारत्ना कर सेतौ चतुर्थोऽध्यायः समाप्तः ।

नारायणी

एते द्वे अपि द्विखण्डकप्रकरणोक्तशिखाखञ्जयोश्छन्दसोः षष्टचक्षरता-मङ्गीकृत्य यथाश्रुतव्याख्यानेन तद्व्यतिरिक्ते अत्र ज्ञेये । यदा त्वस्मदुक्तप्र-

**इति श्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायामर्धसमाध्यायश्चतुर्थः ।।**

बालक्रीड़ा

हों तो वह यवमती वृत्त, छन्द होता है ।।१२।।

सुन्दरी—जिस वृत्त के प्रथम-तृतीय पाद में ससजा माने दो सगण,

---

एवं हि रघौ ८ सर्गे 'अस्मिन सर्गे वैतालीयं छन्दः इति वदन् कोला-चलो मल्लिनाथः तथा नैषधे २ सर्गे सर्गेऽस्मिन् अश्रान्त इतियावत् वैतालीयं छन्द इति वदत् नारायणोऽपि बभ्रमतुः ।

टि. (१) यतो हि "षड् विषमेऽष्टौ समे कलाः" इति लक्षण कस्य मात्राछन्द सो वैतालीयस्योभयत्रापि स्वप्नो नास्ति । किन्तु "वदन्त्यपवक्त्राख्यं वैतालीयं विपश्चितः" इति केदारभट्टनिर्देशानुसारमुक्तम् ।

"अयुजि न न र ल । गुरुः समे न्जभयरवक्त्रमिद ततो जरौ" इति लक्षणकस्य अपरवक्त्राख्यापि वैतालीयस्य नास्ति सः ।

## नारायणी

कारेण तत्र सकलशब्दं पादपरमाश्रित्य व्याख्यायते [ तदा ] तत्रैवैतः योरुक्तत्वान्नात्र वक्तव्यता भवति ॥ १२ ॥

## बालक्रीड़ा

एक जगण और गुरु और द्वितीय-चतुर्थ पाद में सभरालगा एक सगण ( । । ऽ ) एक भमण ( ऽ । । ) एक रगण ( ऽ । ऽ ) एवं लघु गुरु हों तो वह वृत्ता सुन्दरी छन्द होता है। इसे वियोगिनी छन्द के नाम से भी जानना चहिए ॥१३॥

इस प्रकार वृत्तरत्नाकर के चतुर्थ अध्याय की आचार्य मधुसूदन शास्त्री की कृति हिन्दी टीका बालक्रीड़ा समाप्त हुई।



॥ श्रीः ॥

# अथ पञ्चमोऽध्यायः

**मुखपादोऽष्टभिर्वर्णैः**

**परेस्युर्मकरालयैः क्रमाद् वृद्धाः ।**

सेतुः

अथ विषमवृत्तान्याह- मुखपाद इति । यस्याद्यः पादोऽष्टभिर्वर्णैर्द्वितीयो द्वादशाक्षरैस्तृतीयः षोडशाक्षरैश्चतुर्थो विंशत्यक्षरैरित्येवं चतुर्भिश्चतुर्भिर्वर्णैर्वृद्धाः पादाः स्युस्तद्विचित्रपादसंजातसौन्दर्यं पदचतुरूर्ध्वं

नारायणी

अर्धसमान्यत्राभिधायोद्देशक्रममनुसृत्य विषमवृत्तानि लक्षयति—

यस्य वृत्तस्य मुखपाद आद्यपादो वर्णाष्टकेन, परे द्वितीयाः पादा मकरालयैः समुद्रैश्चतुर्भिरक्षरैः क्रमाद् वृद्धाः सततं नैरन्तर्येण स्युस्तद् वृत्तं निर्मलबुद्धिभिः पिङ्गलादिभिः पदचतुरूर्ध्वाभिधमुदितमुक्तम् । किंविशिष्टं तत् । विचित्रैर्विलक्षणैः पादैर्जातं सौन्दर्यं यस्य तत् तादृशम् । अत्र वर्णैरिति सम्पन्नसौन्दर्यमिति च वदता गुरुलघुनिवेशनियमो नास्ति । किं तु श्रोतृश्रोत्रसौभाग्यार्थं वर्णवैचित्र्यं विधेयमिति सूचितम् । प्रथमपादोऽष्टाक्षरः, द्वितीयो द्वादशाक्षरः, तृतीयः षोडशाक्षरः, चतुर्थो विंशत्यक्षरः कार्य इति फलितोऽर्थः । अत्र चैकद्वित्रिचतुरङ्कानां परस्परताडनया पादानां परस्परसङ्करे शङ्खचक्रगदापद्मानां परस्परसङ्करे केशवाद्या इव चतुर्विंशतिभेदा भवन्ति । तत्प्रस्तारो यथा—

बालक्रीड़ा

अथ वृत्तरत्नाकर के पञ्चम अध्याय की हिन्दी टीका बालक्रीड़ा का आरम्भ करते हैं ।

**सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं**
**तदभिहितममलधीभिः पदचतुरूर्ध्वाभिधं वृतम् ॥१॥**

सेतुः

नाम। अत्र गुरु लघु नियमो नास्ति। प्रतिपादं चतुर्वृद्ध्या पदचतुरुर्द्धं-मिति सामान्यतः सूत्रकारोक्तेः।

नारायणी

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ८ | ८ | ८ | ८ | १२ | १२ | १२ | १२ | १२ | १६ |
| १२ | १६ | २० | १२ | १६ | २० | ८ | १६ | २० | ११ | ६ | २० |
| १६ | १२ | १६ | २० | २० | १२ | १६ | १८ | ६२ | १० | २० | ८ |
| २० | २० | १२ | १६ | ११ | १६ | २० | २० | ८ | १६ | ८ | १६ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | १९ | १० | ११ | १२ |
| १६ | १६ | १६ | १६ | १६ | १६ | २० | २० | २० | २० | २० | २० |
| १२ | ८ | २० | १२ | ८ | २० | १२ | ८ | १२ | ६ | ११ | ८ |
| ८ | १२ | ८ | २० | २० | १२ | ११ | ११ | ८ | ८ | १२ | १२ |
| २० | २० | १२ | ८ | १२ | ८ | ८ | १२ | ११ | १२ | ८ | ११ |
| १३ | १४ | ५ | ६ | ७ | ८ | ९ | २० | २१ | २२ | २३ | २४ |

बालक्रीडा

अर्धसमवृत्तों को कह कर यहाँ उद्देशक्रम के अनुसार विषम वृत्तों को कहते हैं —

जिस वृत्त के पहले पाद में आरम्भ के पाद में आठ वर्ण हों और बाद के तीनों में क्रम से मकरालयैः माने समुद्र यानी चार वर्णों की वृद्धि हो। अतः प्रथम में आठ दूसरें में बारह तीसरे में सोलह एवं चौथे में बीस हों ऐसी विलक्षण सुन्दरता से युक्त, वृत्त का नाम पदचतुरूर्ध्व कहते हैं। पदचतुरूर्ध्व का अर्थ माने चारों पादों में ऊपर की ओर माने आगे आगे चारचार वर्णों को वृद्धि हो ॥ १ ॥

प्रथमसमुदिते वृत्ते
विरचितविषमचरणभाजि ।

सेतुः

अस्य भेदमाह प्रथममिति । प्रथममुदिते वृत्ते पदचतुरूर्ध्वनामके पादोक्तवर्णपूर्णसंख्येषु मध्ये प्रतिपादमन्त्यौ द्वौ वर्णौ यदि गुरू स्यातां तदा तस्य आपीड इति नाम । तदिह गुरु केति । गुरुरेव गुरुकः । तद्युगलम् । निधनमन्तो यस्य सः आङा उपसर्गेण सहितः पीड आपीडो भवतीत्यर्थः । तस्यैव विशेषणं लघुविरचितेत्यादि ।

नारायणी

अत्रैकैकपङ्क्तिस्थितिकोष्ठकचतुष्टयस्थिताङ्कसमानाक्षरक्रमिकपादैरेकैको भेदो ज्ञेयः । तत्र प्रथमभेदे मूलस्थितमुदाहरणम् । द्वितीते तु ममैव यथा—

लोभं लम्भय विलयं ( ८ )

लाभालाभावुभौ भाव्य समानौ भव धीरः ( १६ ) ॥

यत्नाद् गुरुजनगौरवमाचर ( १२ )

यदि तवास्मिन्नमूष्मिश्च लोके यशो विशालमाशास्यं स्यात् ( २० ) ॥

इदमेवोदाहरणं पादव्यत्ययेनेतरेषु द्वाविंशतिभेदेषु योज्यम् ॥ १ ॥

एतस्यैव प्रतिपादमन्ते गुरुद्वयनियमे संज्ञान्तरमाह—

विरचितान्विषमान्विषमसंख्याकाक्षरांश्चरणान्भजति, एवंभूते प्रथमोक्ते

बालक्रीड़ा

आपीड—पहले कहे हुए विषम-चरणों वाले वृत्त में पादों के अन्त में जहां दो गुरु हों ऐसे सुन्दर पदों में यति से युक्त छन्द को आङ्केसहित पीड माने आपीड कहते हैं । २ ।

गुरुकयुगलनिधनइह सहित आङा
लघुविरचितपदविततियतिरिह भवति पीडः ॥२॥

### सेतुः

अन्ते गुरुद्वयनियमात्पूर्वं लघु स्वतः प्रतीयते। सा च श्रुतिसुखकृद्यति-विशिष्टेति भावः। २।

आपीडस्य भेदानाह-प्रथममिति। प्रथमं चरणं प्रथमः पादः इतरचरणसमुत्थं द्वितीयचरणसमुत्थं लक्षणं द्वादशा-

### नारायणी

पदचतुरूर्ध्वमिधे वृत्ते इति सर्वोऽनुवादः, गुरुयुग्मं निधनेऽन्ते यस्य तादृशे सति। स्वार्थे कः। इतीत्थं प्रकार आङा उपसर्गेण सहितः पीडः आपीडो भवतीत्यर्थः। कीदृक्। लघुकृतपदरचनया यतिर्यस्मिन्, अन्ते गुरुद्वयस्य नियतत्वादितरभागे लघुविरचितत्वम्। श्रुतिसुख-करी च स्वेच्छया यतिः कार्येति सूचनाय यतिग्रहणम्। विशिष्टानुवाद-श्चाष्टाद्यक्षरेष्वेव पादेष्वन्ते गुरुद्वयं कार्यम्, न तु ततोऽतिरिक्तमिति सूचनार्थः। आपीड इति संज्ञायाश्छन्दस्यप्रवेशादाङा सहित इत्युक्ति-रीतिः। पूर्वोक्तरीत्यापीडे चतुर्विंशतिप्रकारप्र,थमभेदोदाहरणमिदम्। व्युत्पादयति प्रथमेति त्रिभिः॥ २॥

तुर्यशब्देन श्लोकचतुर्थांशः पाद उच्यते। ततश्च प्रथमं तुर्यं प्रथ-मश्चरणः इतरचरणसमुत्थं स्वाऽनन्तरद्वितीयचरणस्थं लक्ष्म लक्षणं श्रयति,

### बालक्रीड़ा

कलिका—यदि पहले कहे हुए विषम चरण वाले आपीड वृत्त के प्रथम पाद का लक्षण द्वितीय प.द में और द्वितीय पाद का लक्षण प्रथम पाद में

प्रथममितरचरणसमुत्थं
श्रयति जगति लक्ष्म ।
इतरदितरजनितमपि यदि तुर्यं
चरणयुगलकमधिकृतमपरमिति कलिका सा ॥३॥

सेतुः

अरस्वरूपं श्रयति अवलम्बते । इतरस्तु द्वितीयपाद इतरगदितं प्रथम-पादगदितमष्टाक्षरस्वरूपं लक्षणमवलम्बते । अयमर्थः—आपीडस्य प्रथम द्वितीयौ चरणौ व्यत्ययरचितौ तृतीयचतुर्थौ तु यथास्थितौ एव तदा

नारायणी

अवलम्बते इतरगदितं स्वाऽव्यवहित प्रथमचरणगतं लक्षणं श्रयति, अपरं चरणद्वयं तृतीयचतुर्थरूपमविकृतं यथावस्थितमित्येवंविधा स आपीड एव सा प्रसिद्धा कलिका । यद्वा स आपीडः प्रथमं प्रथमस्थाने प्रथमपादे द्वितीयपादलक्षणं श्रयति सा कलिका । द्वादशाक्षराष्टाक्षरषोडशाक्षर-विंशत्यक्षरैः पादैः क्रमेण घटितेति सम्पिण्डितार्थः पैङ्गले त्वेतस्या मञ्जरीति नाम ॥ ३ ।

तृतीयश्चरणो मुखचरणगतं प्रथमचरणस्थं लक्षणमनुभवत्यवलम्बते । अपरं पादत्रयं प्रकृतमखिलं लक्ष्म आपीडलक्षणं श्रयति तदा लवली

नारायणी

हो यानी प्रथम चरण में १२ वर्ण एवं द्वितीय में ८ वर्ण हों एवं तृतीय और चतुर्थ पाद वैसे ही हों, तो ऐसे वृत्त को कलिका कहते हैं । ३ ।

लवली—पहले कहे गये आपीड । छन्द के लक्षण के अनुसार प्रथम पाद का लक्षण तृतीय पाद में हो यानी (मुखचरण) प्रथमचरण तृतीय चरण बन जाय और द्वितीय चरण की विशेषता प्रथम चरण में आ जाय एव

द्विगुरुयुतसकलचरणान्ता
सुखचरणरचितमनु भवति तृतीयः

## सेतुः

कलिका नामेति सूत्रकारः[1] यत्तु कलिकामञ्जर्योः पर्यायत्वमिति सुल्लक्षणस्तत्प्रामादिकम्। कलिकाकोरकः पुमान् इति वल्लरिर्मञ्जरिः स्त्रियामिति चामरेण भिन्नार्थतया उक्तत्वात्। एतेन स्फुरत्कुवकुम्भयोरुपरि मणिमञ्जरीत्यादिदशमसर्गगतगीतगोविन्दस्याष्टपदीव्याख्याने रत्नलतेति जगद्धरोक्तं मणिमञ्जरीपदव्याख्यानमपि परास्तम्। ३।

## नारायणी

नाम। क्रमेण द्वादशाक्षरपादशाक्षरविंशत्यक्षरपादवतीत्यर्थः। गुरुद्वययुक्तचतुष्टयान्तेति वृत्तापूरणार्थं सामान्यलक्षणमेवानूदितम्॥ ४॥

## बालक्रीडा

द्विगुरुयुत सकल चरणान्त माने सारे चारों पादों के अंत में दो गुरु हो एवं अन्य चरणों की विशेषताए पूर्वोक्त हों तो ऐसा विषम चरणों वाला छन्द

१—सूत्रकारः पिङ्गलः छन्दोविज्ञानस्य मूलभूत आचार्यो यां मञ्जरीति नाम्ना निर्दिदेश तामेव भट्टकेदारः कलिकेति नाम्ना निर्दिदेश अतोऽत्र सुल्लक्षणस्य प्रमादो नास्ति आचार्यानुपालित्वात्। महाप्रमादस्तु तव भास्करस्य उन्मूलमुद्ग्रन्थञ्च व्याख्याकर्तृत्वाद्। तद्यथा आपीडस्य भेदानाहेति। उद्ग्रन्थनमुन्मूलञ्च व्याख्यानम्। कुस्तत्वयेदं लिखितम् "अस्या मञ्जरीति नाम इति सूत्रकारः। एवं या कलिका सैव मञ्जरीति त्वं मनुषे स्वतः। अन्यच्च "इति पदचतुरूर्द्ध्वप्रकरणम्" एवं समाप्ति निर्दिष्टवांश्च। यदि अपीडस्येमे भेदाः स्युस्तर्हि इत्यापीडप्रकरणमित्यलेखिष्यः तथा तु त्वं नाकरिष्यः। भट्टकेदारोऽपि इति पदचतुरूर्द्ध्वप्रकरणमिति लिलेख। अतः सुल्लक्षणः सुलक्षणः।

**चरण इह हि लक्ष्म**
**प्रकृतमपरमखिलमपि यदि भजति लवली सा ॥४॥**

### सेतुः

द्विर्गुविति । प्रथमचरणेन सामान्यलक्षणानुवादश्छन्दः पूरणाय । यस्यास्तृतीय पादः प्रथमपादस्थमष्टाक्षरत्वलक्षणमवलम्बते शेषं प्राग्वत् लवली नाम । दाक्षिणात्येषु राय अवलीति भाषया प्रसिद्धा लवलीत्युच्यते । हरफा रेवडीत्यन्यदेशभाषया प्रसिद्धा । तथा च रत्नाकरनिघण्टुः—वातलं कफपित्तघ्नं सुगन्धि लवलीफलम् इति । एतेन लवलीलवलीलाभिरास्यलीलालया किलेति भगवद्व्यासोक्तिर्व्याख्याता । एवञ्च लवली अलाबुलताविशेषो वेति केषाञ्चिद् व्याख्यानमज्ञानमूलकमेवेति नादरणीयम् ।४।

### नारायणी

प्रथमं तुर्यं प्रथमश्चरणश्चरमचरणपदं चतुर्थचरणस्थानं प्राप्नोति । चतुर्थो भवतीत्यर्थः । अपरं निखिलं प्रथमोदितचरणत्रयमापीडप्रथमपादोपरिगतद्वितीयादिपादसमं तदिदं छन्दोऽमृतधारा नाम । अवसितौ गुरुद्वययुक्तमिति इदमित्यस्य विशेषणं सत्पूर्ववत्स्वरूपकीर्तनार्थम् । ललितपदयुक्तेति वृत्तपूरणाय स्वरूपोक्तिः । द्वादशषोडशविंशत्यष्टाक्षरपादक्रमवती भवतीति सङ्कलितार्थः । यद्यपि वृत्तकारेण प्रथमस्य तृतीयस्य च प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य च प्रथमत्वेऽमृतधारेति षोडशद्वादशाष्टाविंशत्यक्षरपादक्रमेण विंशतिद्वादशषोडशाष्टाक्षरपादक्रमेण च त्रयोदशैकोनविंशतिभेदयोरेते संज्ञे इति मञ्जर्यां विशेषाऽभावेऽपि उत्तरयोर्विशेष उक्तः, उदाहरणे च तथैव कृते, तथापि 'प्रथमस्य विपर्यासे वञ्जरीलवल्यमृतधाराः' ( पि० सू० ५-२४ ) इति सूत्रस्य साधारण्यात्प्रथमपादमात्रविपर्या-

### बालक्रीड़ा

लवली होती है । अर्थात्—इसके प्रथम चरण में १२, द्वितीय में १६, तृतीय में ८ एवं चतुर्थ में २० वर्ण होते हैं । ४ ।

प्रथममधिवसति यदि तुर्यं
चरमचरणपदमवसितगुरुयुग्मा ।

## सेतुः

प्रथममिति । यस्याश्चतुर्थश्चरणः प्रथम पादस्थमष्टाक्षरत्व-मवलम्बते शेषं प्राग्वत् सा अमृतधारा नाम । अधिवसतीत्याद्यप्यनुवादः पूर्ववत् । अत्र कलिकायामाद्यः पादो द्वादशोऽक्षरो द्वितीयोऽष्टाक्षर-स्तृतीयः षोडशाक्षरश्चतुर्थो विंशत्यक्षरः । लवल्यां द्वादशाक्षर आद्यः । षोडशाक्षरो द्वितीयः । अष्टाक्षरस्तृतीयः । विंशत्यक्षरश्चतुर्थः । अमृत-धारायां द्वादशषोडशविंशत्यष्टाक्षराः क्रमेण पादाः । प्रथमस्य विपर्यासि मजरी लवल्यमृतधारा इत्यत्र सूत्रे प्रथमस्य विपर्यासमात्राभिधानात्सामा-

## नारायणी

सोक्तेरितरेषां क्रमाऽभ्यनुज्ञया वा सूत्रस्य मूलकारोक्त एवार्थे तात्पर्या-देवमुक्तम् । आपीडवत्पदचतुरूर्ध्वेऽपि पादव्यत्यासे मञ्जर्याद्या भेदा ज्ञेयाः । यथा आदावेव सकलपादेषु गुरुद्वययुतं पदचतुरूर्ध्वं प्रत्यापीडः । यथा वृत्तौ—

चित्तं मम रमयति
कान्तं वनमिदमुपगिरिणदि ॥
कूजन्मधुकरकलरवकृतजनधृति,
पुंस्कोकिलमुखरितसुरभिकुसुमचिततरुतति ॥

## बालक्रीड़ा

अमृतधारा—पूर्वोक्त आपीड वृत्त के आठ अक्षरों वाला प्रथम चरण यदि चौथा चरण हो जाय तथा अन्य चरणों की स्थिति वैसी ही हो तथा प्रत्येक चरण के अंत में दो गुरु रहें तो वह वृत्त अमृतधारा कहलाता है । अर्थात् प्रथम चरण में १२, द्वितीय चरण में १६, तृतीय चरण

निखिलमपरमुपरितनसममिह ललितपादा
त्रितयममृतधारा ।।५।।

**सजसमादिमे सलघुकौ च न सजगुरुकेष्वथोद्गता ।**

सेतुः

त्यक्रमाभ्यनु ज्ञानान्निष्कर्ष इति भट्टकेदाराभिमायः। इति पदचतुरूर्द्ध प्रकरणम् । ५ ।

सजमिति। यस्या आदिमे पादे सगग जगणौ सगणलघू च अथद्वितीय-पादे नगण सगण जगण गुरवः। त्र्यंत्रौ तृतीये पादे तु भगण नगण जगण

नारायणी

आदावन्ते च गुरुद्वयसहितं तदेवोभयापीडः। पैङ्गले त्वयमपि प्रत्या-पीड एव यथा तत्रैव—

कान्तावदनसरोजं
हृद्यं घनसुरभिमधुरसाढ्यम् ।।
पातु रहसि सततमभिलषति मनो मे
किंचिन्मुकुलितनयनमविरमणितरमणीयम् ।।

अनयोः पूर्वोक्तविधया चतुर्विंशतित्वमूह्यम्। उदाहरणानि त्वतिविस्तर-भयान्नोदाहृतानि स्वयमूह्यानि ।। ५ ।।

## इति पदचतुरूर्ध्वप्रकरणम् ।

पाद इति शेषः। आदिमे पादे स-ज-स लघवः अथाऽनन्तरम्, द्वितीय-

बालक्रीड़ा

में २० एवं अन्तिम चौथे चरण में ८ वर्ण हो तथा अंत में प्रत्येक चरण में दो गुरु हो तो वह अमृतधारा वृत्त होता है। ५।

पदचतुरूर्ध्वप्रकरण समाप्त हुआ।

उद्गता—जिस वृत्त के प्रथम चरण में क्रमशः सगण (।।ऽ)

त्र्यङ्घ्रिगतभनजला गयुताः सजसा जगौ चरणमेकतः पठेत् ।६।

## सेतुः

लघु गुरवः । चतुर्थे पादे सगण जगण सगण जगण गुरवः साउद्गता नाम । अस्याः पूर्वार्द्धे यतिनियममाह-चरणमेकत इति । प्रथमं चरण द्वितीयेन सह ऐक्येन अविलम्बेन पठेदर्द्धान्ते यतिरिति भावः । चरणेति । यस्य तृतीय पादे रगण नगण भगण गुरवः ; शिष्टेषु पदेषु उद्गतावत् तत्सौरभकं नाम । नयुगंमिति । यस्य तृतीये पादे नगणद्वयं सगणद्वयञ्च । शेषं पादत्रयमुद्गतावत् तल्ललितं नाम । इत्युद्गताप्रकरणम् । ६ ।

## नारायणी

पादे इत्यर्थ । न-स-ज-गुरुषु सत्सु तृतीयेऽङ्घ्रौ पादे ये भ-न-ज-लघवस्ते गयुता गुरुयुक्ताः कार्या इत्यर्थः । परिशेषाच्चतुर्थे स-ज-सा गणा ज-गुरु च चरणम् । एकवचननिर्देशात्प्रथममेकं चरणमेकत एकीकृत्य द्वितीयेनैतत्पठेत् । प्रथमद्वितीयौ पादावविलम्बेन पठेत् । अत्रान्तर्यतिं न कुर्यादित्यर्थः । सज-सपिति द्वन्द्वैकवद्भावः । स्वार्थे कौ । त्रयाणां पूरणेऽङ्घ्रौ गता ये भ न ज लास्ते गयुक्ताः कार्या इति । मध्यमपूरण पदलोपिसमासाश्रयणेन उद्देश-विधानाद्वा सर्वविधानाच्च तीयप्रत्ययोत्पत्तिरसामर्थ्यं च न भवतीति ज्ञेयम् । एकत इत्येकशब्दो भावप्रधानस्तृतीयार्थे च तसिः । तथा चैक्येनेत्यर्थः । ल्यब्लोपे पञ्चमी वा । प्रथमं द्वितीयेनैकं विधाय विधाय पठेदित्यर्थः । ६ ।

## बालक्रीड़ा

जगण (। । S) लघु हो, दूसरे में नसज गुरु माने नगण (। । ।) सगण, जगण और एक गुरु हो, तृतीय चरण में भगण (S । ।) नगण (। । ।) एवं एक लघु एवं एक गुरु हो तथा चतुर्थ चरण में सगण जगण, सगण, जगण और एक गुरु हो तो वह उद्गता छन्द होता है इसके दो पादों को एक करते हुए पढ़ना चाहिए । ६ ।

**चरणत्रयं भजति लक्ष्म यदि सकलमुद्गतागतम् ।**
**नौ भगौ भवति सौरभकं चरणे यदीह भवतस्तृतीयके ॥७॥**
**नयुगं सकारयुगलं च भजति चरणं तृतीयकम् ।**

## सेतुः

म्सःजिति । यत्र प्रथमे पादे म स ज भा गुरू च । द्वितीये स त ज र गुरवः । तृतीये द्वौ नगणौ सगणश्च । चतुर्थे त्रयो नगणाः जगणाः जगणयगणौ च तदुपस्थितप्रचुपितं नाम । प्रथमं चरणं पृथक् पठनीयं न तूद्गतावद् द्वितीयेन सह विलम्बेन । अन्यत्र त्रितयं चरणत्रयं तु एकत ऐक्येन अविलम्बेनेत्यर्थः । नौ पादे इति । यस्य तृतीयपादे द्वौ नगणौ सगणनगणौ नगणसगणौ चेति षड्गणः । शेषे पादत्रये उपस्थितप्रचुपितवत्

## नारायणी

स्वार्थे कः । तृतीये चरणे नौ र-गणन-गणौ भ-गुरू च भवतः । चरण-त्रयपरिशेषात्प्रथमद्वितीयचतुर्थरूपम् उद्गतास्थितं समग्रं लक्षणं भजति, तदिह शास्त्रे सौरभकं भवतीति व्यवहितान्वयाऽध्याहाराभ्यामर्थः । ७ ।

तृतीयपादे न-न-स-साः, शेषं तृतीयान्यच्चरणत्रयं पूर्वोक्तोद्गतावत्तदा बहुदर्शिभिर्ललितं नामोक्तम् । मतेर्विपयबाहुल्येनोक्ता न तु स्वतः ।

## बालक्रीड़ा

सौरभक— चरणत्रयं भजति लक्ष्म माने जिसके प्रथम द्वितीय चतुर्थ में तीन चरण में पूर्वोक्त उद्गता छन्द के लक्षण भजे गये हों माने विद्यमान हों एवं यदि केवल तृतीय चरण में क्रमशः रगण ( ऽ । ऽ ) नगण ( । । । ) भगण ( ऽ । । ) और गुरु हों तो वह सौरभक छन्द होता हैं । ७ ।

ललित— जिस वृत्त के तृतीय चरण में दो नगण ( । । । ) एवं दो सगण ( । । ऽ ) हों तथा अन्य तीन चरणों में पूर्वोक्त उद्गता के लक्षण विद्यमान

तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य खलु पूर्वतुल्यकम्।८

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितयं सनजरगास्ततो ननौ सः ।
त्रिनपरिकलितज्यौ

सेतुः

तद्वर्धमानं नाम। लघु सुन्दरं वृत्तं पिङ्गलाद्यैर्गदितम्। अत्र प्रथमाङ्घ्रौ कृता यतिश्चेत्तदा वर्धमानमिति। चेच्छन्दार्थस्तुशब्दः इति पूर्वयतेरनुवादो नानन्वितः। एवं सति प्रथमाङ्घ्रिकृतयतीहं इति सुधोक्तपाठान्तरकल्प·

नारायणी

अन्यथा स्थूलबुद्धित्वोक्त्या निन्दैव स्यात् ।स्वार्थे कौ। तथोद्गतायाः प्रथमतृतीयपादव्यत्यये मन्थरा नाम। उदाहरणमूह्यमेव ॥८॥

इति वृत्तरत्नाकरटीकायामुद्गताप्रकरणम्

म-स-ज-भ-गगुरवः प्रथमपादः। स चैकः पृथक्पठनीयः, न तूद्गतादिवद् द्वितीयेनैकीकृत्येत्यर्थः। प्रथमार्थे तसिः। अन्यच्चरणत्रयं कथ्यत इति शेषः। स-न-ज-र-गुरुभिर्द्वितीयः पादस्तदनन्तरं तृतीयपादे न-नौ स-गणश्च। त्रिभिर्नगणैः परिकलितौ सहितौ ज-यौ गणौ चतुर्थे पादे। इदं छन्द उपस्थितपदपूर्वं प्रचुपितम्। उपस्थितप्रचुपितमित्यर्थः। अन्यस्तु प्रथमोऽङ्घ्रिरेकः केवलः

बालक्रीड़ा

हों तो इस प्रकार के लक्षण युक्त छन्द को उरुमति विद्वान् लोग ललित छन्द कहते हैं। ८।

उपस्थितप्रचुपितम्—जिस वृत्त के प्रथम चरण में म्सौ ज्भौ गौ माने मगण, सगण, जगण भगण और दो गुरु हों द्वितीय चरण में सनजरगा यानी सगण, नगण, जगण रगण और गुरु तथा तृतीय चरण में दो नगण और एक

**प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥९॥**
**नौ पादेऽथ तृतीयके सनौ नसंयुक्तौ**
**प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ॥**

## सेतुः

नाऽपि न यथाश्रुतपाठान्वयसामंजस्ये सहृदयचमत्कारमावहति। भट्टास्तु प्रथमाङ्घ्रिकृतयतिस्तु" इत्येकं पदं तच्च क्विबन्तम्। यत्या स्तूयते प्रशस्यते इति व्युत्पत्तेः। तुगभावस्तु आगमशास्त्रास्यानित्यत्वादाहुः। स्यादेतद्यदि

## नारायणी

पठनीयः। अन्यत्तु चरणत्रयं पृथक्कथनाद्भिन्नत्वेनैकीकृत्य पठनीयम्। न तु तत्प्रतिचरणान्तं विरामः कार्यः, ततः 'श्लोकार्धे तु विशेषतः' इत्यस्यापवादोऽयमिति व्याचख्यौ ॥ ९ ॥

तृतीयपादे नौ नगणौ, अथ ततः स-नौ सगणनगणौ नसगणाभ्यां युक्तौ एवं षड् गणा भवन्ति। अपरं पादत्रयं प्रथमद्वितीयचतुर्थरूपमुपस्थितप्रचुपित-तुल्यमेव भवति। इत्यमुना प्रकारेण प्रसिद्धवीमिर्लघु सुन्दरं वर्धमानं नाम वृत्तमुदितमुक्तम्। प्रथमाङ्घ्रौ कृतया यत्या प्रस्तूयते प्रशस्यते प्रशस्ततया पठ्यते तत्तादृगिति वर्धमानविशेषणम्। तुगभावस्तु 'आगमजमनित्यम्' इति स्मरणात्। तु इति भिन्नपदे तु यतिरित्यन्तं पुंलिङ्गं स्त्रीलिङ्गं वाऽन-

## बालक्रीड़ा

सगण तथा चतुर्थ चरण में त्रिनपरिकलितजयौ तीन नगण के बाद एक जगण एक यगण हो तो वह उपस्थितप्रचुपित छन्द होता है। ९।

वर्धमान—जिस वृत्त के प्रथम चरण द्वितीय तथा चतुर्थ चरण में पूर्वोक्त उपस्थितप्रचुपित छन्द का लक्षण विद्यमान हो तथा तृतीय चरण

**तृतीयमपरमपि पूर्वसदृशमिह भवति**
**प्रततमतिभिरिति गदितं खलु वृत्तम् ॥१०॥**
**अस्मिन्नेव तृतीयपादके तजराः स्युः ।**
**प्रथमे च विरतिरार्षभं वदन्ति ॥**

## सेतुः

कर्मणि क्विप् स्यात्स एव हि तत्र दुर्लभः। कर्त्तरि कृदिति कर्त्तर्येव प्रवृत्तेः। यत्तु सुलक्षणः प्रथमांत्रिकृतयतिरिति क्रियाविशेषणमित्याह तत्र मृदु पचतीत्यादिवत् क्रियाविशेषणानां नपुंसकत्वमिति स्मरणान्नपुंसकत्वापत्तेः। इष्टापत्तौ तु छन्दोभङ्गः। तस्मादस्मदुक्तं युक्तम्। अस्मिन्निति अस्मिन् उपस्थितप्रचुपिते यदपि तृतीये तजरा स्युः शिष्टेषु उपस्थितप्रचुपितवल्लक्षणं प्रथमपादे यतिश्च तच्छुद्धविराड् ऋषभं नाम।

## नारायणी

न्वितं स्यात्। यतीहेति तु पाठो निर्दोषः। अयं च पूर्वोक्तानुवाद एवेति व्याख्याद्वयं तद्वदेव ज्ञेयम् ॥ १० ॥

अस्मिन्वर्धमाने एव उपथितप्रचुपिते वा तृतीयपादे यदि त-ज-र-गणास्त्रयः स्युरपरं च चरणत्रयमुपस्थितप्रचुपितवत्स्यात्, तच्छुद्धविराडिदं पुरः स्थितं पूर्वं वर्तमानं यस्य तादृशमार्षभं शुद्धविराडार्षभं नाम ब्रुवन्ति वृद्धाः। संज्ञाया वृत्तेऽप्रवेशादुक्ता रीतिरियं प्रथमे पादे यतिरिति पूर्ववदेवार्थः। पैङ्गले तु शुद्धविराड्वृषभमिति संज्ञा। केचित्तु प्रथमे पादे यता·

## बालक्रीड़ा

में नौ सनौ नस अर्थात् दो नगण एक सगण व दो नगण एक सगण हो तो वह वृत्त छन्द वर्धमान होता है। १०।

शुद्धविराडार्षभम्—जिस वृत्त के तृतीय पाद में क्रमशः नजरा माने नगण, जगण और रगण हों तथा अन्य तीनों पाद प्रथम द्वितीय एवं

**तच्छुद्धविराट् पुरः स्थितं ।**

**त्रितयमपरमपि यदि पूर्वसमं स्यात् ।।११।।**

**विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।**

सेतुः

ऋषभमेवार्षभं स्वार्थिकोऽण् च्छन्दःपूरणाय । नह्येतत्संज्ञान्तरमिति ध्येयम् । ये तु प्रथमे यतावार्षभं प्रतिपादयवन्तः शुद्धविराडिति छन्दोभेदमाहुस्ते प्रमाणाभावादुपेक्ष्याः इत्युपस्थितप्रचुपितप्रकरणम् ।

अथ नुक्तछन्दसो लक्षणमाह—विषमेति । क्रमभेदात् संख्याभेदाच्च विषमाणि अक्षराणि लघुगुरवो येषु ते विषमाक्षराः । तेषां पादा यस्मिन

नारायणी

वार्षभम् । यदा तु प्रतिपादं यतिस्तदा शुद्धविराडादिकं तदेव यतिभेदाच्छन्दो-द्वयमेव पृथग्वदन्ति ।। ११ ।।

इत्युपस्थितप्रचुपित प्रकरणम् ।

अत्र ग्रन्थेऽनुक्तानि च्छन्दांसि सामान्यसंज्ञया गृह्णाति—

विषमाण्यक्षराणि येषु तादृशाः पादा यस्य तत् । तथा अक्षराणां वैषम्यं च पादेषु गुरुलघुक्रमनियमसाम्याभावात्सङ्ख्यासाम्याभावाच्च । वा अथवा । पादैरसमं स्वीयैः पादैः कृत्वा चतुःसङ्ख्याकपादैरन्यवृत्तैरतुल्यं त्रिपञ्चषडादि-पादमिति यावत् । न तु समसङ्ख्याकपादरहितमित्यर्थः । षट्पदाद्यसंग्रहा-पत्तेः । अत एव—

वालक्रीड़ा

चतुर्थ पूर्वोक्त उपस्थितप्रचुपित छन्द के लक्षण से युक्त हो एवं यति प्रथम चरण में हो तो वह शुद्धविराडार्षभ छन्द होता है । ११ ।

गाथा—विषमाक्षरपादं यानी विषम अक्षरों से युक्त पादों वाला छन्द अर्थात् जिसके प्रत्येक पाद में वर्णों की संख्या बिषम

**यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥१२॥**

इति श्रीमट्टकेदारविरचिते वृत्तरत्नाकरे पञ्चमोऽध्यायः ।

## सेतुः

तत्तयोथोक्तम् । वा अथवा पादैश्चतुःसंख्यकैः पादैः श्रीभूतिभिर्विसदृशं पञ्चादिसंख्यापादविशिष्टमित्यर्थः । तदेवाह-- यच्छन्दो नेति । यच्छन्दः प्राक् नोक्तं तस्य गाथेति नामेत्यर्थः । यस्तु पदचतुरूर्ध्वादीनां गाथात्वं निवारयितुमाह--यदितीत्याहुः तच्चिन्त्यम् । पादैरसममित्यनेनैव तेषां

## नारायणी

शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः । (वृ० र० १--१८)

इति प्रागुक्तम् । विषमाक्षरपादत्वं पदचतुरूर्ध्वादीनामप्यस्तीति तेषां गाथात्वं निवारयितुमाह--यदिति । अत्र यच्छन्दो विशेषतो नोक्तं तदित्यर्थः । इदं चावृत्त्या स्वातन्त्र्येणाऽपि योज्यम् । तेन समाक्षरपादानां समपादानां च कुङ्मलदन्त्यादीनामपि गाथात्वं सिध्यति । अत एव 'अत्रानुक्तं गाथा' (पिं० सू० ८--१) इति सम्पुटाकारेण सूचितं पिङ्गलेन । विषमाक्षरपादस्य गाथात्वेऽष्टदशसप्तनवाक्षरमूलकारिकैवोदाहरणम् । पादैरसमत्वे उदाहरणमाह दशधर्मं वदिति । दशधर्मशब्दयोगात्लक्षणया भारतस्था षट्पदा गाथा दशधर्म-शब्देनोच्यते सा यथा

## बालक्रीड़ा

३,५,७ आदि हो । तथा पाद भी विषम हो यानी चार पद की जगह पांच सात आदि हो। महाभारत के दश धर्मं न जानन्ति······ इस श्लोक के विषम पादों की तरह जिसके पाद विषम हों एवं यच् छन्दों नोक्तमत्र माने पिछले अध्यायों में जो छन्द नहीं कहा गया हों तो उस छन्द को विद्वान लोग गाथा नाम से जानते हैं । १२ ।

इस प्रकार वृत्तरत्नाकर के पाँचवे अध्याय की आचार्य मधुसूदन शास्त्री की कृति हिन्दी टीका बालक्रीड़ा समाप्त हुई

सेतुः

गाथात्वस्य निरस्तत्वात् । वस्तुतस्तु यच्छन्द इत्याद्येव गाथालक्षणं; विषमेत्यादि तु एकं वृणीत इत्यादिवदनुवादश्छन्दःपूरणायेति ज्ञेयम् । यदुक्तं सूत्रकारेण "अत्रानुक्तं गाथा" इति । विषमाक्षरपादत्वे तु इयमेव कारिका उदाहरणम् । क्रमेण अष्टदशसप्तनवाक्षरपादघटितत्वात् । एतेन

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ।
महिषेऽसुराणामधिपे देवानाञ्च पुरन्दरे ।

इति मार्कण्डेयपुराणे व्याख्यातम् । एवं सति तद व्याख्यातॄणां छान्दसत्वकल्पना अश्रद्धेया । पादैरसममित्यस्योदाहरणप्रदर्शनं प्रतिजनीते—दशधर्मवदिति । दशधर्मशब्दवती भारतस्था षट्पदीया गाथा उदाहरणमित्यर्थः । यद्वा दशधर्मवदिति दशधर्मशब्दविशिष्टं भारतस्थं वाक्यं गाथासंज्ञकमस्तीत्यर्थः । तदेव गाथावाक्यं लिखति । "दश धर्मं न जानन्ति" इत्यादि । मत्तः सुरादिपानात् । प्रमत्तोऽनवधानात् । उन्मत्तो भूताद्यावेशात स्पष्टमन्यत् । एतेन

शब्दतो वार्थतो वापि मनाक् काव्यार्थसूचनम् ।
यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा ।
षड्विंशत्या पदैर्वापि सा नान्दी परिकीर्तिता ।

इत्यादि सङ्गृहीतम् । अत्र समछन्दसामप्युक्तादिजातिष्वनुक्तानां कविप्रयोगेषु दृश्यमानानाम् "इति धौतपुरन्ध्रि मत्सरान्" इत्यादीनामेके गाथात्वमाहुः । अन्ये तु तेषामुक्तादिसंज्ञाभिरुक्तत्वेनानुक्तत्वाभावान्न गाथात्वमन्यथा उक्तादिसंज्ञानामनवकाश इति प्रतिपेदिरे । प्राकृते तु आर्याणामेव गाथात्वमुक्तम् ।

सेतुः

पटमवारे हन ता दुरा अरर
होदं संजुत्ता जह पट मंत हती
अदह पंच विहसी आहेति ।

अत्रोक्तासंज्ञानां प्रागुक्तानां छन्दसामुदाहरणानि संस्कृतवत् प्राकृतादावपि कर्पूरमञ्जर्यादिग्रन्थेषु यथासम्भवं स्वयामूह्यानि । उक्तञ्च सरस्वतीकण्ठाभरणे

संस्कृतेनैव केप्याहुः प्राकृतेनैव केचन ।
साधारण्यादिभिः केऽपि केचिन्म्लेच्छादिभाषया ।
न म्लच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् ।
संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ।
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ।
पैशाचाद्यं पिशाचाद्या मागधीं हीनजातयः ।

इति श्रीमदग्निहोत्रिकुलतिलकायमानश्रीमदापाजिभट्टस्सूनुभास्कर विरचिते वृत्तरत्नाकरसेतौ गाथालक्षणं पञ्चमोऽध्यायः ॥ ५ ॥



नारायणी

दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश । इति ।

## नारायणी

असमपादानां दशाष्टादशादिपदानां नाटकादिस्थनान्द्यादीनामप्यनेन गाथात्वमुक्तं भवति । यथोक्तम्—

शब्दतो वार्थतो वापि मनाक्काव्यार्थसूचना ।
यत्राष्टभिर्वा दशभिरष्टादशभिरेव वा ॥
षड्विंशत्या पदैर्वापि सा नान्दी परिकीर्तिता । इति ।

'यच्छन्दो नोक्तम्' इत्यस्य स्वातन्त्र्येण व्याख्याने समानामपि गाथात्वं भवति। तत्र कियतीनां वृत्यादिपर्यालोचनयोदाहरणानि सलक्षणानि कथ्यन्ते । तत्र त्रिष्टुभि—'भतनगगुरुभिः कुड्मलदन्ती नाम' । यथा—

कुड्मलदन्ती विकटनितम्बा किन्नरकण्ठी लघुतरमध्या ।
बिम्बफलोष्ठी मृगशिशुनेत्रा मित्र ! भवन्तं सुखयतु कान्ता ॥

अत्र पञ्चभिः षड्भिश्च यतिः । जगत्याम्–'नजजरैर्वरतनुः' । यथा—

अयि ! विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्तते वरतनु ! सम्प्रवदन्ति कुक्कुटाः ॥

षड्भिः षड्भिश्च यतिः । 'ममसमैर्जलधरमाला' । यथा—

धत्ते शोभां कुवलयदामश्यामे शैलोत्सङ्गे जलधरमाला नीला
विद्युल्लेखाकनकधृतालङ्कारा क्रीडासुप्ता युवतिरिवाङ्के पत्युः ॥

चतुर्भिरष्टाभिश्च यतिः । 'नौ रौ गौरी' । यथा—

प्रणमत चरणारविन्दद्वयं त्रिभुवननमितस्य गौरीपतेः ।
सकृदपि मनसैव यः सेवितः प्रवितरति यथेष्टमष्टौ गुणान् ॥

एतस्या एव गौर्या दण्डकात्प्रागेकैकरेफवृद्धौ नामान्तराणि भवन्ति ॥
'भतनसा ललना ।' तथा—

## नारायणी

या कुचगुर्वी मृगशिशुनयना पीननितम्बा मदकरिगमना ।
किन्नरकण्ठी सुललितदशना सा तव सौख्यं वितरतु ललना ॥

पञ्चभिः सप्तभिश्च यतिः । अतिजगत्याम् 'सजसजगैः कनकप्रभा' । यथा—

कनकप्रभा पृथुनितम्बशालिनी विपुलस्तनी हरिणशावकेक्षणा ।
इयमङ्गना नयनयोः पथि स्थिता कुरुते न कस्य मदनातुरं मनः ॥

'ननततगुरुभिः कुटिलगतिः' । यथा—

अधरकिसलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम् ।
ध्रुवमिदमुचितं यद्विपत्तौ सतामतिकुटिलगतेः स्यान्महानुत्सवः ॥

सप्तभिः षड्भिश्च यतिः । शक्वर्याम्—'भजसनैर्गुरुभ्यां च वरसुन्दरी' । यथा—

स्वादुशिशिरोज्ज्वलजलैः सुपरिपूर्णं
वीचिचयचञ्चलविचित्रशतपत्रम् ॥
हंसकलकूजितमनोहरतटान्तं
पश्य वरसुन्दरि ! सरोवरमुदारम् ॥

'मभनयगगैः कुटिलम्' । तथा—

अध्वन्यानां जनयति सुखमुच्चैः कूजन्
दात्यूहोऽयं पथि निचुलिनि तोयोपान्ते ॥
कर्णाटस्त्रीरतिकुहरिततुल्यच्छेदै—
र्नादैः कण्ठस्खलनकुटिलमन्दावर्तैः ॥

वेदै रसैः समुद्रैश्च यतिः । अष्टौ—'भरनभभगैः शैलशिखा ।' यथा—

शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे
जीर्णतृणं करेण निदधाति कपिश्चपलः—
क्षुद्रवधापवादपरिहारविनीतरुष—
स्तस्य न तावतीव लघुता द्विपयूथभिदः ॥

'भरयननगैर्वरयुवती ।'

कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला
पार्वणशर्वरीशगर्वापहमुखकमला ॥
पीननितम्बबिम्बसंवाहनशिथिलगति—
मुञ्जनराधिराज ! भूयात्तव वरयुवतीः ॥

अत्यष्टौ–'ससजभजगगै रतिशायिनी ।' यथा माघे—

इति पौरपुरन्ध्रिमत्सरान्सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ॥
अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीशे ॥ (शि० ८–७१)

दशभिः सप्तभिश्च यतिः । 'नजभजजलगैरवितथम् ।' यथा—

श्रुतिपरिपूर्णवक्त्रमतिसुन्दरदाग्विभवं
तमखिलजैमिनीयमतसागरपारगतम् ॥
अवितथवृत्तविप्रजनपूजितपादयुगं
पितरमहं नमामि बहुरूपमुदारमतिम् ॥

एतदेवाष्टपञ्चचतुर्भिर्यतौ कोकिलकं नाम यथा—

नवसहकारपुष्पमधुनिष्कलकण्ठतया
मधुरतरस्वरेण परिकूजति कोकिलकः ॥
प्रथमककारविद्धवचनैर्धनलुब्धमते !
तव गमनस्य भङ्गमिव सम्प्रति कर्तुमनाः ॥

धृतौ—'रसजजभरैर्विबुधप्रिया' । यथा—

कुन्दकोमलकुड्मलद्युतिदन्तपङ्क्तिविराजिता
हंसगद्गदवादिनी वनिता भवेद्विबुधप्रिया ॥
पीनतुङ्गपयोधरद्वयभारमन्थरगामिनी
नेत्रकान्तिविनिर्जितश्रवणावतंसितकैरवा ॥

अष्टभिर्दशभिश्च यतिः । अतिधृतौ–'यमनसररगुरुभिर्विस्मिता' । यथा माघे—

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय ॥
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्र वपुरथविशद्धाम वीक्षाम्बभूवे॥ (शि० २०-७६१)

षड्भिः षड्भिः सप्तभिश्च यतिः । प्रकृतौ–'नजभजजरैर्धृतश्रीः' । यथा माघे—

तुरगशताकुलस्य परितः परमेकतुरङ्ग जन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ॥
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥ (शि० ३-८२)

त्रिःसप्तसु यतिः । एवमादीनि वृत्तानि प्रस्तारमहाकविप्रयोगेषु दृश्यमानानि गाथाख्यानि ! यदा तु 'यच्छन्दो नोक्तमत्र' इति विषमाक्षरपादमित्यस्य विशेषणं तदा समच्छन्दसां गाथात्वाभावादेतानि त्रिष्टुबादिष्वेव द्रष्टव्यानि । एवमन्यान्यपि च्छन्दांसि कविप्रयोगानुरोधाज्ज्ञेयानि, समार्धसमविषमप्रस्तारेषु तेषामुपलम्भात् । विशेषसंज्ञाऽज्ञानात्तु नोदाहृतानि ।

एतज्जातिवृत्तात्मना द्विविधमपि च्छन्दो न केवलं संस्कृताविषयम् । किन्तु प्राकृतदेशभाषास्वपि कवीच्छया भवति । तत्रात्रैव प्राकृतदिषु गाथेति संज्ञिता सा । तथा ममैव—

सअलसिणेहमिअङ्को तुइ गुणरअणाअरे उदिदो ।
नीलुप्पलप्पवोहे सिढिलो मा भोदु पच्छणा एसा ॥
( सकलस्नेहमृगाङ्कस्त्वयि गुणरत्नाकरे उदितः ।
नीलोत्पलप्रबोधे शिथिलो मा भवतु प्रार्थनैषा ॥ )

वैतालीये च शकुन्तलायां यथा—

शहजे किल जे विणिन्दिए ण हु दे तम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामि दुए ब्व शोत्तिए ॥
( सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ )

एवं समादिष्वपि कर्पूरमञ्जर्यादौ ज्ञेयान्युदाहरणानि, भाषायामपि ।
तत्र महाराष्ट्रभाषायामुपजातो यथा—

अगा ! मुरारी भवदुःख भारी कामादिवैरी मन हें थरारी ॥
मी मूढ देवा न करोंच सेवा माझा कुठावा परि तां करावा ॥

गुर्जरभाषायामपि स्रग्विणी यथा—

वित्ततें संचवूं युक्तते भोगवूं अग्निते होमवूं विप्रतें आपवूं ।
पापतें खण्डवूं कामतें दण्डवूं पुण्यतें संचवूं रामते सेववूं ॥

कान्यकुब्जभाषायामपि वसन्ततिलका यथा—

कन्दरूप जबतें तुम लीन्ह कृष्ण !
से कोप काम हमही बहु पीर छोड़ी ॥
तो भेटिकै विरहपीर नसाउ मोरी
यैं भाँति दूति पठई कहि बात गोपी ॥

म्लेच्छसङ्करे मलिन्यां यथा कस्यचित्—

हरनयनसमुत्थज्वालया वह जलाया
रतिनयनजलौघैः खाक बाकी बहाया ॥
तदपि दहति चेतो मामकं क्या करोंगी
मदनशिरसि भूयः क्या बला आन लागी ॥

एवं गौडादिभषासु तत्तत्सङ्करे चोदाहरणानि ज्ञेयानि ॥

अथ 'शेषं गाथा' इति सामान्यत उपक्षिप्तानि विस्तरभीतेर्विशेषतो
नोक्तानि प्राकृतादिषु प्रायः परिदृष्टानि च्छन्दांसि प्राकृतपिङ्गलशम्भुच्छन्द-

श्चूडामण्यादिग्रन्थपर्यालोचनया व्युत्पित्सुव्युत्पत्त्यर्थमस्माभिरुच्यन्ते । तत्र मात्राच्छन्दःसूपयुक्ता गणभेदाः । तत्र द्विकलौ द्वौ । यथा—ऽ, ।।, त्रिकलास्त्रयः । ।ऽ, ऽ।, ।।। चतुष्कलाः 'पञ्चार्यादिषु संस्थिताः' ( वृ. र. १-८ ) इत्यत्र पञ्च मूल एव पूर्वमुक्ताः । पञ्चकला अष्टौ । ऽऽ, ऽ।ऽ, ।।।ऽ, ऽऽ।, ।।ऽ।, ।ऽ।।, ऽ।।।, ।।।।।, षट्कलास्त्रयोदश यथा ऽऽऽ, ।।ऽऽ, ।ऽ।ऽ, ऽ।।ऽ, ।।।।ऽ, ।ऽऽ।, ऽ।ऽ।, ।।।ऽ।, ऽऽ।।, ।।ऽ।।, ।ऽ।।।, ऽ।।।।, ।।।।।।, एतेषां व्यवहारार्थं संज्ञास्तास्तैस्तैः कृतास्ता अत्यन्तोपयोगाभावाद् द्विककलादिशब्दैरेव व्यवहारसिद्धेर्ग्रन्थविस्तरभयान्नोच्यन्ते । गौरवात्षट्कलस्य हरि-शशि-सूर्य-शक्र-शेष-अहि-कमलत्ब्रह्म-कलि-चन्द्र-ध्रुव-धर्म-शालि-करसंज्ञाः ।

अथ गाथाप्रकरणम् । तत्र चतुःपञ्चाशद्भिममर्त्राभिर्गाहूः, सप्तपञ्चाशाद्भिर्गाथा । विपरीतार्धघटिताभिस्तावतीभिरेव विगाथाः । षष्टिमात्र उद्गाथाः । द्विषष्टिमात्राभिः गाहिनी । सैव विपरीतार्धा द्विषष्टिमात्राभिः सिंहिनी । चतुःषष्टिमात्राभिः स्कन्धक इति सप्त भेदाः । तत्र यदार्धद्वयेऽपि सप्त सार्धाश्चतुर्मात्रिका गणाः षष्ठगणस्त्वेकलघुरूपस्तदा गाहूः । अत्र उदाहरणम्—

चन्द्रो चन्दणहारो तावअ रूअं पआसन्ति ।
चण्डेसरस्स कीती जावअ अप्पं न दंसेई ।।
( चन्द्रश्चन्दनहारस्तावद्रूपं प्रकाशयत ।
चण्डेश्वरस्य कीतिर्यावदात्मानं न दर्शयति ।। )

संस्कृते त्वियमुपगीतिः । आर्यैव प्राकृते गाथा । उदाहरणं ममैव प्रागुक्तम् । तदुक्तम्—

पढमं बारह मत्ता बीए अट्ठारहेहिं संजुत्ता ।
जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा ।।
( प्रथमं द्वादश मात्रा द्वितीयेऽष्टादशभिः संयुक्ता ।
यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा ।। इति । )

तत्र यदि सप्तविंशतिर्गुरवस्त्रयश्च लघव इत्येवं त्रिंशदक्षरा तदा लक्ष्मी नाम्नी। षड्विंशतिर्गुरवः पञ्च लघवस्तदा ऋद्धिः। एवमेकगुरुपञ्चपञ्चाशल्लघुपर्यंतमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रिंशदक्षरकं भेदमारभ्य षट्पञ्चाशदक्षरभेदपर्यन्तं सप्तविंशतिर्भेदाः। क्रमेण तन्नामानि—लक्ष्मी–ऋद्धि–बुद्धि—लज्जा—विद्या–क्षमा–गौरी–देही–रात्रि–पूर्णाच्छाया–कान्ति—महामाया—कीर्ति–सिद्धा–मानिनी–रामा–गाहिनी–विश्वावासिता—शोभा–हरिणी–चक्री–सारसी–कुररी–सिंही–हंसी (२७) इति। त्रयोदशलघुपर्यन्तं विप्रा, तत एकविंशतिलघ्ववधि क्षत्रिया, ततः सप्तविंशत्यवधि लघुभिर्वैश्या, ततः सर्वा शूद्रेति गाथाजातिः। गाथान्तर्गतेनकेन जगणेन कुलीना गाथा भवति। द्वाभ्यां कुलटा। बहुभिर्वेश्या जगणहिता रण्डा। तत्रापि या प्रथमादिविषमादिस्थाने जगणयुक्ता सा गुर्विणीति संज्ञिता कर्तुर्नायकस्य च दुष्टा भवति। सर्वासां गाथानां प्रथमपादो हंसीवन्मन्थरः पठनीय, द्वितीयः सिंहविक्रमवदुद्धतः, तृतीयो गजगतिवल्ललितः, चतुर्थः सर्पगतिवच्चञ्चल इति। गाथाद्वितीयार्धं यदि प्रथमं, प्रथमं च द्वितीयं तदा विगाथा। इयं संस्कृते उद्गीतिः। यथा—

परिहर माणिणि ! माणं पेक्खहि कुसुमाइं णीवस्स।
तुम्ह कए मरहिअओ गोण्हइ गुलिआइ धनुइ किर कामो॥
( परिहर मानिनि ! मानं प्रेक्षस्व कुसुमानि नीपस्य।
तव कृते खरहृदयो गृह्णाति गुलिका धनुषि किल कामः॥ )

तथा द्वयोरप्यर्धयोस्त्रिंशन्मात्रा गाथा प्रथमार्धवद्यदि भवति तदोद्गाथा। यथा—

सोऊण जस्स णामं अंसू णअणाइ सुमुहि ! रुद्धन्ती।
भण वीरचेइवइणो पेक्खामि मुहं कहं जहिच्छं से॥
( श्रुत्वा यस्य नामाश्रूणि नयने सुमुखि ! रुन्धन्ति।
भण वीरचेदिपतेः पश्यामि मुखं कथं यथेच्छं तस्य॥ )

इयमेव संस्कृते गीतिः। तथा पूर्वार्धे त्रिंशन्मात्रा गाथावत् उत्तरार्धं एकगुर्वाधिक्येन द्वात्रिंशत् तदा गाहिनी। अर्धवैपरीत्ये च सिंहिनी। क्रमेणोदाहरणे—

मुञ्चहि सुन्दरि! आअं अप्पहि हसिऊर सुमुहि! खग्गं मे।
कप्पिअ मेच्छसरीरं पेच्छिइ वअणाइ तुम्म धु अहं वीरो॥
(मुञ्च सुन्दरि! पादमर्पय हसित्वा सुमुखि! खड्गं मे।
कल्पयित्वा म्लेच्छशरीरं प्रेक्षिष्ये वदनं तव ध्रुवमहं वीरः॥)
वरिसइ कणअह विट्ठी तप्पइ भुअणे दिआणिसं जागन्ती।
णीसङ्क साहसङ्को णिन्दइ इन्दं अ सूरबिम्बं अ॥
(वर्षति कनकस्य वृष्टि तपति भुवने दिवानिशं जाग्रत्।
निःशङ्कं साहसाङ्को निन्दति इन्दु च सूरबिम्बं च॥)

एते संस्कृते ललितावल्गुगीतिसंज्ञे। तथार्धद्वयेऽपि चतुर्मात्रिकाष्टगणघटितं स्कन्धकं सेतुकाव्ये यथा—

जं जं आणेइ गिरिं रइरहचक्कपडिघट्टणसहं हणूमा।
तं तं लीलाइ णलो वामकरत्तोलिअं रएइ समुद्दे॥
(यं यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनुमान्।
तं तं लीलया नलो वामकरोत्तोलितं रचयति समुद्रे॥)

इयमेव संस्कृते आर्यागीतिः। अत्र यद्यष्टाविंशतिगुरवः, अष्टौ लघवस्तदा नन्दसंज्ञा। तत एकगुरुद्विषष्टिलघुपर्यन्तमेकैकगुरुह्रासे, लघुद्वयद्वयवृद्धौ चाष्टाविंशतिर्भेदाः। तेषां क्रमेण संज्ञाः—नन्द-भद्र-शेष-सारङ्ग-शिव-ब्रह्म-चारण-वरुण-नील-मदन-तालङ्क-शेखर-शर-गगन-शरभ-विमति-क्षीर-नगर-नर-स्निग्ध-स्नेहन-मदकल-लोभ-शुद्ध-सरित-कुम्भ-कलश-शशधराख्याः। तत्र नन्दोदाहरणम्—

चन्दा कुन्दा कासा हारा हंसा तिलोयणा केलासा।
जेत्ता जेत्ता सेत्ता तेत्ता कासीस जिणिअ ते कित्ती॥

( चन्द्रः कुन्दः काशो हारो हंसस्त्रिलोचनः कैलाशः ।
यावद्यावच्छ्वेतं तावत्काशीश ! जितं ते कीर्त्या ॥ )

एवमन्येष्वपि भेदेषु ज्ञेयम् ।

इति गाथाप्रकरणम् ॥

---

अथ दोहा ।

यस्याः प्रथमतृतीययोः पादयोः प्रथमं षट्कलो गणः, ततश्चतुष्कलः, ततस्त्रिकल इत्येवं त्रयोदश मात्राः, द्वितीयचतुर्थयोः षट्कलचतुष्कलौ समानौ त्रिकलस्थाने एको लघुरेवेत्येकादशमात्रास्तदिदमष्टाचत्वारिंशन्मात्राभिर्दोहाच्छन्दः । यथा—

सुरअरु सुरही परसमणि णहि वीरेससमाण ।
ओ वक्कल ओ कठिणतणु ओ पसु ओ पाखाण ॥

( सुरतरुः सुरभिः स्पर्शमणिर्नहि वीरेशसमानः ।
स वल्कलः स कठिनतनुः स पशुः पाषाणः )

अत्र द्वाविंशतिर्गुरवश्चत्वारो लघवो यत्र तद् भ्रमरम् । तत एक गुरुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रयोविंशतिर्नामानि । यथा—भ्रमर-भ्रामर-शरभ-श्येन-मण्डूक-मर्कट-करभ-नर--मराल-मदकल-पयोधर-बल-वानर-त्रिकल-कच्छप--मत्स्य-शार्दूल-अहिवर-व्याघ्र--विडाल--श्व-उन्दुर-सर्पेति । सर्पे अष्टाचत्वारिंशल्लघव एव । तत्र भ्रमरोदाहरणम्—

जा अद्धङ्गे पव्वई सीसे गङ्गा जासु ।
जो देआणं वल्लहो वन्दे पाअं तासु ॥

( यस्यार्धाङ्गे पार्वती शीर्षे गङ्गा यस्य ।
यो देवानां वल्लभो वन्दे पादौ तस्य ॥

तत्रापि द्वादशावधिलघुका विप्रा। ततो द्वाविंशत्यवधिलघुका क्षत्रिया। द्वात्रिंशदवधिलघुका वैश्या। इतरा शूद्रेति। तथा यस्याः प्रतिपादं प्रथमे तृतीये च चरणे जगणः सा दुष्टा दोहेति।

इति दोहाप्रकरणम्॥

---

अथोत्कष्टा।

प्रथमं चतुष्कलौ द्वौ गणौ, ततस्त्रिकल एकः, एवमेकादशमात्रारातपादषट्कयुक्तोत्कष्टा। तत्रापि सर्वैर्लघुभिर्लौहाङ्गिनी नाम। ततः तुर्गुरुवृद्धौ अष्टाष्टलघुह्रासे दशपर्यन्तं हंस्यादीनि। लौहाङ्गिनी लघ... ६६, हंसी गुरु ४ लघवः ५८ रेखा गुरु ८ लघवः ५०, तालङ्किनी ...रु १२ लघवः ४२, कम्पी गुरु १६ लघवः ३४, गम्भीरा गुरु २० ...घवः २६, काली गुरु २४ लघवः १८, कालरुद्राणी गुरु २८ लघवः १०, ...वमष्टौ भेदाः। तत्र लौहाङ्गिनी यथा—

विमुहचलिअ रण अचलु परिहरिअ हअगअबलु।
हलहलिअ मलमणिबइ जसु जस तिहुअण पिबइ।
वणरसिणरबइ लुलिम सअल उबरि जस फुरिअ॥
विमुखचलितो रणेऽचलः परिहृत्य हयगजबलम्।
हलहलितो मलयनृपतिर्यस्य यशस्त्रिभुवनं पिबति।
वाराणसीनरपतिर्लुलितः सकलोपरि यशः स्फुरितम्॥
एवं सर्वेषूह्यम्।

इत्युत्कष्ठा।

अथ रोला।

यथेच्छं गुरुलघुभिश्चतुर्विंशतिमात्राः प्रतिचरणं भवन्ति, एवं पादचतुष्टययुता रोला। यथा—

## नारायणी

पअभरदरदरु धरणी तरणिह धुलिहि झम्पिअ।
कमठपीठ धरपडिअ मेरुमन्दरसिर कम्पिअं ॥
कोहे चलिअ हम्मीरवीर गअजूहजुत्तो।
कट्ठे किअउ आकन्द मुच्छि मेच्छके पुत्तो ॥
(पदभरदरदरिता धरणी तरणिरथो धूलिभिराच्छादितः।
कमठपीठं धरापतितं मेरुमन्दरशिरः कम्पितम् ॥
क्रोधेन चलितो हम्मीरवीरो गजयूथयुक्तः।
कष्टेन कृत आक्रन्दो मूर्छितो म्लेच्छपुत्रः ॥)

अत्र एकादश गुरवो द्वौ लघू यदि पादे तदा रोला शुद्धा। प्रतिपादमेकैकगुरुह्रासे लघुद्वयवृद्धौ च करतालादिसंज्ञा भेदा द्वादश। यथा—कुन्द-करताल-मेघ-तालङ्क-काल-रुद्र-कोकिल-कमल-इन्द्र-शंभु-चामर-गणेश्वरेति।

इति रोला ॥

अथ गन्धा

प्रथमपादे सप्तदशवर्णाः द्वितीयेऽष्टदश। मात्रासु त्वनियमः। द्वितीयार्धमपि तादृगेव सा गन्धा।

कण्ण चलन्ते कुम्म चलइ पुणवि असरणा।
कुम्म चलन्ते महि चलइ भुअणभअकरणा ॥
महिअ चलन्ते महिहरु तह अ सुरअणा।
चक्कवइ चलन्ते चलइ चक्क जह, तिहुअणा ॥
(कर्णे चलति कूर्मश्चलति पुनरप्यशरणे।
कूर्मे चलति मही चलति भुवनभयकरणी ॥
मह्यां चलन्त्यां महीधरस्तथा च सुरगणाः।

चक्रवर्तिनि चलति चलति चक्रं यथा त्रिभुवम् ॥ )

इति गन्धा ॥

अथ चतुष्पदा ।

चतुर्मात्राः सप्तगणा गुरुश्चेति त्रिंशन्मात्र एकः पादः, तादृशा एवान्ये त्रयः एवं विंशत्यधिकशतं मात्रा भवन्ति । एवं चतुर्भिः पादैरेकः पादस्तादृशैश्चतुर्भिः पादैश्चतुःशतान्यशीत्यधिकानि मात्राः । एतावता चतुष्पदा भवति । तत्र लाघवाय एकपादोदाहरणम्—

जसु सीसइ गङ्गा गोरि अधङ्गा गिम पिन्धिअ फणिहारा ।
कण्ठे ट्ठिअ वीसा पिन्धण दीसा संतारिअ संसारा ॥
किरणावलिकन्दा बन्दिअ चन्दा णअणहि अणल फुरन्ता ।
सो मङ्गल दिज्जउ बहुसुह किज्जउ तुज्झ भवाणीकन्ता ॥
(यस्य शीर्षे गङ्गा गौरी अर्धाङ्गे ग्रीवायां पिनद्धः फणिहारः ।
कण्ठे स्थितं विषं परिधानं दिशः सन्तारितसंसारः ॥
किरणावलिकन्दो वन्दितश्चन्द्रः नयनेऽनलः स्फुरति ।
स मङ्गलं ददातु बहु सुखं करोतु तव भवानीकान्तः ॥ )
एतस्या अनन्ता एव भेदाः ।

इति चतुष्पदा ॥

चतुर्मात्रैः सप्तभिर्गणैस्त्रिभिर्लघुभिश्चैकः पादः । तत्र प्रथमं दशमात्रासु विरतिः, ततोऽष्टसु, ततस्त्रयोदशसु, एवंप्रकारकपादचतुष्टयेन घत्ता नाम । यथा—

रण दक्ख दक्ख हणु जिगु कुसुमधणु अन्धअगन्धबिणासकरु ।
स रक्खउ सङ्करु असुरभअङ्करु गोरिनारि अद्धङ्गधरु ॥

रणे दक्षो दक्षो हतो जितः कुसुमधनुरन्धकगन्धविनाशकरः ।
स रक्षतु शङ्करः असुरभयङ्करो गौरीनार्यर्धाङ्गधरः ॥ )

इति घत्ता ॥

अथ घत्तानन्दः ।

षट्कल आदौ, ततस्त्रिकलास्त्रयः, ततः पञ्चकलः, ततः षट्कलः, ततो लघुद्वयम् । एवं प्रकारकपादचतुष्टयेन द्विषष्टिमात्रको घत्तानन्दः । एकादशसु सप्तसु त्रयोदशसु च यतिः । यथा—

जे बन्दिअ शिर गङ्ग हणिअ अणङ्ग अद्धङ्गे परिकर धरणु ।
सो जोईजणमित्त हरेउ दुरित्त सङ्काहरु सङ्करचरणु ॥
( येन वन्दिता शिरसि गङ्गा हतोऽनङ्गोऽर्धाङ्गे परिकरं धरति ।
स योगिजनमित्रं हरतु दुरितं शङ्काहरः शङ्करचरणः ॥

इति घत्तानन्दः ॥

अथ षट्पदप्रकरणम् ।

काव्यनाम्नश्छन्दसः पादचतुष्टयेनोल्लालनाम्नः पादद्वयेन च षट्-पदं भवति । प्रथमं द्वे मात्रे, ततः पञ्च चतुर्मात्रा गणाः, ततो द्वे मात्रे, इति चतुर्विंशतिमात्राभिः काव्यपदचतुष्टयम् । तत्रैकादशसु त्रयोदशसु च यतिः, उल्लालस्य पादे अष्टाविंशतिर्मात्राः पञ्चदशसु त्रयोदशसु च यतिः । एवं पदद्वयम् । एतादृक् षट्पदम् । यथा—

पिन्धउ दिढसण्णाह बाहउप्पर पक्खर दइ ।
बन्धुसमदि रण घसउ सामिहम्मीर बअण लइ ।
उड्डउ णहपह भमउ खग्ग रिउसीस डालउ ।
पक्खर पक्खर ठेल्लि पेल्लि पव्वअ उप्फालउ ।
हम्मीरकज्ज जज्जल भणइ कोहाणल मुहमह जलउ ।

सुरयाणसीस करवाल दइ तेज्जि कलेबर दिउ चलउ ॥
( परिधाय दृढसन्नाहं वाह्वोरुपरि पक्षरं दत्त्वा ।
बन्धूनां सम्मत्या रणं धर्षयामि स्वामिहम्मीरवचनं गृहीत्वा ।
उड्डयामि नभःपथं भ्रमामि खड्गं रिपुशिरसि पातयामि ।
पक्षरे पक्षरे ठेलयित्वा पेलयित्वा पर्वतमुत्फालयामि ।
हम्मीरकार्ये जज्जल्लो भणति क्रोधानलो मुखमध्ये ज्वलति ।
सुलतानशिरसि करवालं दत्त्वा त्यक्त्वा कलेवरं दिवं चलति ॥)

प्रकारान्तरमपि षट्पदे भवति । आदौ षट्कलो गणः, ततश्चत्वारश्चतुष्कलाः, ततोऽन्ते द्विकलः एवंविधैश्चतुर्भिश्चरणैः षण्णवतिमात्रा भवन्ति । तत उल्लालपदद्वयं पूर्ववदेव । उभययापि द्विपञ्चाशदधिकं शतं मात्राणां षट्पदे भवति । अत्रोदाहरणम् —

जहा सरअससिबिम्ब जहा हरहारहंसा ठिअ ।
जहा फुल्लसिअकमल जहा सिरिखण्ड खण्डकिअ ॥
जहा गङ्गकल्लोल जहा रोसाणिअ रुप्पइ ।
जहा दुद्धवरसुद्धफेण फम्फाइतलुप्पइ ॥
पिअपाअपसाअदिट्ठिपलु णिहुअ हसइ जहा तरुणिजण ।
वरमन्ति चण्डेसर तह तुअ कित्ति देक्खु हरिबम्भ भणा ॥
( यथा शरच्छशिबिम्बं यथा हरहारहंसाः स्थिताः ।
यथा फुल्लसितकमलं यथा श्रीखण्डः खण्डीकृतः ॥
यथा गङ्गाकल्लोलो यथा रोषाणितं रूप्यन् ।
यथा दुग्धवरशुद्धफेनं उद्गम्य तपति ॥
प्रियपादप्रसाददृष्टिपतितो निभृतं हसति यथा तरुणीजनः ।
वरमन्त्रिन् ! चण्डेश्वर ! तथा तव कीर्तिं दृष्ट्वा हरिर्ब्रह्मा भणति ॥ )

काव्यस्वरूपं त्वादावन्ते च षट्कलो मध्ये त्रयश्चतुष्कलास्तृतीयो जो न्लौ वेति । इदं स्वतन्त्रस्य काव्यच्छन्दसः करणे । षट्पदे तूक्तैव

विधा ज्ञेयाः। काव्यस्य भेदाः पञ्चचत्वारिंशत्। तत्र यत्र षण्णवति-र्लघूनां न तु गुरुः स शक्रः। तत एकैकगुरुप्रक्षेपेण लघुद्वयद्वयह्रासे च शम्भ्वाद्या भृङ्गान्ता भेदा भवन्ति। तथा च भृङ्गे अष्टौ लघवः प्रतिपादमेकादश लघुप्रकारेण समुदितचतुश्चत्वारिंशद् गुरवस्ततो न ह्रासः। यथा—शक्र-शम्भु-शूर--गण्ड-स्कन्ध-विजय-दर्प-ताराङ्क--समर--सिंह-शीर्ष—उत्तेज---फणि-रक्ष-प्रतिधर्म-मराल—मृगेन्द्र—दण्ड--मर्कट-अनुबन्ध--बासण्ठ—कण्ठ-मयूर-बन्ध-भ्रमर--भिन्न-महाराष्ट्र-बलभद्र—राज-वलित-मयूख--मन्थान-वलि—मोह-सहस्राक्ष-बाल—दर्पित-शरभ-दम्भ--उद्दम्भ—वलिताङ्क-तुरग--हार-हरिण-अन्ध भृङ्गेति। तत्र शक्रस्योदाहरणम्—

जसु कर फणिवइ वलअ तरुणिवर तणुमह विलसइ।
णअण अणल गल गरल विमल ससहर सिर णिवसइ॥
सुरसरि सिरमह वहइ सअलमणदुरितदलणकर।
हसि ससहरहर हरउ दुरित तुअ दिसउ अभअवर॥
(यस्य करे फणिपतिर्वलयस्तरुणी वरा तनुमध्ये विलसति।
नयने अनलो गले गरलं विमलः शशधरः शिरसि निवसति॥
सुरसरिच्छिरोमध्ये वहति सकलमनोदुरितदलनकरः।
हसित्वा शशधरधरो हरतु दुरितं तव दिशत्वभयं वरम्॥)

षट्पदे गणाशुद्ध्यादौ पङ्गुत्वादयो दोषा ग्रन्थान्तरादवसेयाः, विस्तरभयात्तु न प्रपञ्च्यन्ते। द्वात्रिंशल्लघ्ववधिकस्य काव्यस्य विप्रजातिः, ततश्चत्वारिंशल्लघ्ववधि क्षत्रियजातिः, ततोऽष्टाचत्वारिंशल्लघ्ववधि वैश्यजातिः अवशिष्टः शूद्र इति जातिभेदः। उल्लाललक्षणं तु—

त्रयश्चतुष्कला आदौ त्रिकलः षट्कलस्ततः।
चतुष्कलोऽयं त्रिकल उल्लाले लक्षणं मतम्॥ इति।

तत्र सर्वगुरुः षट्पदो यथा—

जाआ जा अद्धङ्ग सीस गङ्गा लोलन्ती।

सब्वासा पूरन्ति सब्ब दुक्खा तोलन्ती ॥
णाग्रारा आहार दीस बासा बासन्ता ।
वेआला जा सङ्ग णट्ट दुट्ठा णासन्ता ॥
णाचन्ता कन्ता उच्छब्बे ताले भूमीकम्पले ।
जा दिट्ठे मोक्खा पाबिज्ज सो तुह्याणं सुक्ख दे ॥
( जाया यस्यार्धाङ्गे शीर्षे गङ्गा लोलते ।
सर्वाशाः पूरयन्ती सर्वदुःखानि त्रोटयन्ती ॥
नागराज हारो दिशा वासांसि वसानः ।
वेताला यत्सङ्गे नष्टदुष्टान् नाशयन्तः ॥
नृत्यन्तः कान्तं तालकम्पितभूमयः ।
यद्दृष्टे मोक्षः प्राप्यते स युष्माकं सुखं ददातु ॥

अथ षट्पदभेदाः । तत्र काव्ये चतुश्चत्वारिंशद् गुरवः, उल्लाले च षड्विंशतिः एवं मिलित्वा सप्ततिर्गुरवो द्वादश च लघवो यत्र स द्व्यशीत्यक्षरो अजयनामा प्रथमो भेदः, ततः सर्वलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयप्रक्षेपेणैकैकवर्णवृद्धौ एकसप्ततिरजयाद्या भेदा भवन्ति । यथा—अजय-विजय-वलि—वर्ण-वीर-वेताल—बृहन्नल-मर्कट—हरि—हर—ब्रह्म-इन्दु—चन्दन—शुभंकर—शाल—सिंह—शार्दूल—कूर्म—कोकिल—खर-कुञ्जर—मंदन—मत्स्य—सारङ्ग—शेष—सारस—पयोधर—कुन्द-कमल-कुन्द—वारण—शरभ—जङ्गम—शर—मुशर—मसर—सारस—सरस—मेरु—सकल—मृग—सिद्ध—बुद्धि—कलकल—कमलाकर—धवल—मृतक—ध्रुव—बलय—किंनर—शक—जन—मेघाकर—ग्रीष्म—गरुड—शशि—सूर्य—शल्य—नर—तुरग—मनोहर—गगन—रत्न—नव—हीर—भ्रामर-शेखर—कुसुमाकरदीप—शङ्ख—वसु—शब्दाः । तथा च अजये वर्णाः ८२, गुरवः ७०, लघवः १२, अन्त्ये शब्दे लघवः १५२ ।

इति षट्पदप्रकरणम्

अथ पज्झटिका ।

प्रतिपादं चत्वारश्चतुष्कला गणास्तत्रान्तिमो जगण एव । एवं चतुर्भिः पादैश्चतुःषष्टिमात्राकं पज्झटिकाच्छन्दः । यथा—

जे गञ्जिअ गोलाहिवइ राउ उद्दण्ड ओड्ड जसु भअ पलाउ ।
उरु बिक्कम विक्कम जिणिअ जुज्झ ताकण्ण परक्कम कोण बुज्झ ॥
(येन गंजितो गौडाधिपती राजा उदण्ड ओड्रो यस्य भयेन पलायितः ।
गुरुविक्रमो विक्रमो जितो युद्धे तत्कर्णपराक्रमं को न बुद्धयते ॥ )

इति पज्झटिका ॥

अथालिल्लिहः ।

प्रतिपादं षोडशमात्राः, अन्ते च मात्राद्वयं लघुद्वयात्मकं पादे च गणो न भवति तच्छन्दोऽलिलिहसंज्ञम् । यथा—

जहि आसामविदेहाकिल्लउ, सुत्थिर डाहररज्जा जिणि लिउ ।
कालिञ्जर जिण्हि कित्ती थप्पिअ, धण आरज्जिअ धम्मे अप्पिअ ॥
( येनासामविदेहदुर्गाणि, सुस्थिरडाहरराज्यं जित्वा गृहीतम् ।
कालिञ्जरं जित्वा कीर्तिं स्थापयित्वा, धनमर्जयित्वा धर्मे अर्पितम् ॥ )

इत्यलिलिहः ॥

अथ नवपदप्रकरणम् ।

अनियतगुरुलघुक्रमाः षोडशमात्राः प्रतिपादं भवन्ति, तच्चतुष्षष्टिमात्रं पादाकुलकम् । पञ्चदशमात्रभिः प्रथमतृतीयपञ्चमपादाः । पञ्चदशमात्राः, द्वितीये द्वादशमात्राः, चतुर्थ एकादशमात्राः एवमष्टषष्टिमात्रा भवन्ति । एतदनन्तरं दोहाच्छन्दः समस्तमित्येवं नवपदं छन्दो रड्डा नाम । तत्र विषमपादेष्वादौ त्रिकलस्ततस्त्रयश्चतुष्कलाः, तत्रापि प्रथमेऽन्ते जगणश्चतुर्लघुर्वा, तृतीयपञ्चमयोर्भगणोऽन्ते द्वितीयपादे सर्वल-

ध्वन्तास्त्रयश्चतुष्कलाः, चतुर्थे द्वौ चतुष्कलौ, ततस्त्रयो लघव इति। तत उक्तलक्षणा दोहाच्छन्दः । यथा—

ममइ महुअर फुल्ल अरविन्द, णवकेसु काणण फुलिम्र
सव्वदेस पिकराव चुलिलअ, सिअल पवण लहु बहइ,
मलअकुहर णवब्रेलिल पेल्लिम्र ।
चित्त मणोभव सर हणइ, दूर दिगन्तर कन्त ।
के परि म्रप्प उबारिहउ, एपरि मिलिअ दुरन्त ।।
(भ्रमति मधुकरः फुल्लारविन्दे, नवकिंशुकैः काननं फुल्लम् ।
सर्वदेशः पिकरावश्चुलुकितः ।
शीतलपवनो लघु वहति, मलयकुहरे नववल्लीं क्षिप्त्वा ।
चित्तं मनोभूः शरैर्हन्ति, दूरदिगन्तरे कान्तः
केन प्रकारेणात्मानमुद्धारयामि, एवं परिमिलितो दुरन्तः ।। )

एतद्भेदाः सप्त । तत्र प्रथमतृतीयपञ्चमपादेषु चतुर्दशमात्रा कलमी (१) द्वितीयचतुर्थयोरेकादश मा नन्दा (२) प्रथमतृतीयपञ्चमपादेषूनविंशति द्वितीयचतुर्थयोरेकादश सा मोहिनी (३), विषमपादेषु पञ्चदश समयोरेकादश सा चारुसेनी (४), विषमेषु पञ्चादश समयोर्द्वादश सा भद्रा (५) विषमेषु पञ्चदश द्वितीये द्वादश चतुर्थे एकादश स राजसेनः (६), विषमेषु षोडश समयोरेकादश द्वादश वा सा तालङ्किनी (७) इति ।

इति नवपदप्रकरणम् ।।

---

अथ पद्मावती ।

द्विगुरन्तगुरुरादिगुरुः ॒ सर्वलघुरित्येतैश्चतुर्मात्रैः गणैः यथासम्भवं गणाष्टकघटितपादचतुष्टया पद्मावती । अत्र जगणो नायकपीडादिदोषदाता अतश्चाण्डाल इत्युच्यतेऽतो न शुभः । यथा—

भअभङ्गिअ बङ्गा भग्गु कलिङ्गा तेलङ्गा रण मुक्कि चले।
मरहट्ठा धिट्ठा अग्गिअ कट्ठा सोरट्ठा भअपाअ पले ।।
चम्पा रण कम्पा पब्बअ कम्पा ऊत्थाउत्थी जीउ हरे।
कासीसर राणा किअउ पआणा बिज्जाहर भण मन्तिवरे ।।
(भयभग्ना बङ्गाः भग्नाः कलिङ्गास्तैलङ्गा रणं मुक्त्वा चलिताः।
महाराष्टा धृष्टा लग्नाः काष्ठासु सौराष्ट्रा भयेन पादे पतिताः ।।
चम्पा रणे कम्पिता पर्वताः कम्पिता उत्थायोत्थाय जीवं हरन्ति।
काशीश्वरे राजनि कृतप्रयाणे विद्याधरो भणति मन्त्रिवरः ।। )

इति पद्मावती ।।

---

अथ कुण्डलिका।

पूर्वोक्ताया दोहाया यद्येकमर्धमपरं चार्धं पूर्वोक्तलक्षणकाव्येन युक्तं तदिदं चतुश्चत्वारिंशदधिकशतमात्राभिः शृङ्खलायमकानुप्रासवद् गुणालङ्कारवत्कुण्डलिकाख्यं छन्दः। अत्र चाविरम्य कुण्डलिकाकारेण पठनात्कुण्डलिकेति संज्ञा। यन्मते दोहा द्विपदा तन्मतेनेयं षट्पदा, यन्मते दोहा चतुष्पदा तन्मते कुण्डलिकाष्टपदेति। यथा—

ढोल्ला मारिअ ढिल्लिमह मुच्छिअ मेच्छसरीर।
पुर जज्जल्ला मन्तिवर चलिअ वीर हम्मीर ।।
चलिअ वीर हम्मीर पाअभर मेइणि कम्पइ।
दिग मग णह अन्धार धूलि सूरजरह झम्पइ ।।
दिग मग णह अन्धार अणु खुरसाणक ओल्ला।
दमलिदअसु विपक्ख मारु ढिल्लीमह ढोल्ला ।।
( ढोलं ताडयित्वा दिल्लीमध्ये मूर्छयित्वा म्लेच्छशरीराणि।
पुरो जज्जलो मन्त्रिवरश्चलति वीरो हम्मीरः।
चलिते वीरे हम्मीरे पादभरेण मेदनी कम्पते ।।

दिङ्मार्गनभःस्वन्धकारे धूली सूर्यरथं भम्पयति ।
दिङ्मार्गनभःस्वन्धकारे अनीताः खुरसानकाः पुरुषाः ।
दलितार्सुविपक्षस्ताड्यते दिल्लीमध्ये ढोलः ॥ )

इति कुण्डलिका ॥

---

अथ मदनान्तकः ।

अत्र प्रतिपादे विंशत्यक्षराणि पञ्चविंशतिश्च मात्राः, तत्रापि प्रथमश्चतुर्मात्रिको गणः, अन्ते एको गुरुः, मध्ये यथासुखमिश्रिता गुरुलघवो स मदनान्तकः । यथा—

भञ्जिअ मलअ चोलवइ णिवलिअ गञ्जिअ गुज्जरा ।
मालवराअ मलअगिरिअ लुक्कि परिहरि कुञ्जरा ॥
खुरसाणा खलिअ रणह अहिअ लङ्घिअसाअरा ।
हम्मीर चलिअ हारव पलिअ रिउगणह काअरा ॥
( भग्नो मलयश्चोलपतिर्निर्बलीकृतो गञ्जिता गुर्जराः ।
मालवराजो मलयगिरौ निलीनः परिहृत्य कुञ्जरान् ॥
खुरसानाः स्खलिताः रणमध्येऽहिता लङ्घितसागराः ।
हम्मीरे चलिते हारवाः पलायिता रिपुगणाः कातराः ॥ )

इति मदनान्तकः ॥

---

अथ द्विपदी

आद्यन्तयो षट्कलो गणो मध्ये चतुष्कलाश्चत्वारः । एवंविधपदद्वयरचिता द्विपदी । आदौ षट्कलस्ततः पञ्च चतुष्कलास्ततो गुरुरिति वा । यथा—

दाणव दव वेवि ढुक्कन्तउ गिरिवरसिहर कम्पिओ ।

हअगअपाअघाअ उट्ठन्तउ धूलिहिं गअण झम्पिअो ॥
( दानवदेवाभ्यां द्वाभ्यामपि ढौक्यमानं गिरिवरशिखरं कम्पितम् ।
हयगजपादघातोत्थितधूलिभिर्गगनमाच्छादितम् ॥ )

इति द्विपदी ॥

अथ खञ्जा

नव चतुर्लघवस्ततो रगण एवं दशभिर्गणैरेकोनचत्वारिंशदक्षरैरेक-चत्वारिंशन्मात्राभिरर्धं यस्या सा खञ्जा । द्वितीयमप्यर्धं तादृक् । यथ—

अहि ललइ महि चलइ गिरि खसइ हर खलइ ।
ससि घुमइ अमिअ वमइ मुअल जिबि उट्टए ॥
पुणु धसइ पुणु खसइ पुणु ललइ पुणु घुमइ ।
पुणु लमइ जिबिअ बिविह समर परिदिट्ठए ॥
( अहिर्ललति मही चलति गिरिः पतति हरः स्खलति ।
शशी घूर्णते अमृतं वमति मृता जीवित्वोत्तिष्ठन्ति ॥
पुनर्वर्षति पुनः स्खलति पुनर्ललति पुनर्घूर्णते ।
पुनर्वमति जीबिता विविधं समरे परिदृश्यते ॥ )

इति खञ्जा ॥

अथ शिखा ।

अत्र प्रथमार्धे षट् चतुर्लघवो द्वितीयार्धे सप्त उभयोरप्यन्ते जगणो भवति सा शिखा । यथा—

फुलिअ महु भमर बहु रअणि—
पहु किरणबहु अबअरु बसन्त ॥
मलअगिरिकुसुमधरि पबण बह
सहब कह सहि मण णिलअ णहु कन्त ॥

( पुष्पितमधुके भ्रमरवध्वो रजनीप्रभुः
किरणबहुरवतरति वसन्तः ।।
मलयगिरिकुसुमधरः पवनो वहति
सहे कथं सखि ! मम निलये न हि कान्तः ।। )

इति शिखा ।।

अथ माला ।

आद्यार्धे नव चतुर्लघवस्ततो रगणस्ततो द्वौ गुरू इत्येवं पञ्चचत्वारिंशन्मात्रा गाथोत्तरार्धेन द्वितीयार्धं सैषा माला । यथा—

वरिस जल भमइ घण मलअ सिअल पवण मणहरण
कणअ पिअरि णचइ बिजुरि फुल्लिआ णीवा ।
पत्थरविच्छर हिअओ पिअओ णिलअं ण आवेइ ।।
( वर्षति जलं भ्रमति घनो मलयशीतलः पवनो मनोहरणः ।
क्षणशः पीता नृत्यति विद्युत्फुल्ला नीपाः ।
प्रस्तरविस्तरहृदयः प्रियो निलये नायाति ।। )

इति माला ।।

अथ चूलिका ।

यदि दोहाच्छन्दसि प्रत्यर्धं लघुगुरुद्वयरूपाः पञ्चकला अधिका दीयन्ते, तथा दोहाच्छन्दसो मात्राः ४८ अधिकाश्च १०, एवं अष्टपञ्चाशन्मात्रा भवन्ति तदा चूलिका नामच्छन्दः । यथा—

राआ लुद्ध समाज खल बहु कलहारिणि सेवक धुत्तउ ।
जीवण चाहसि सुक्ख जइ परिहर घरजण बहुगुणजुत्तउ ।।
(राजा लुब्धः समाजः खलः वधूः कलहकारिणी सेवको धूर्तः ।

नारायणी

जीवने वाञ्छसि सुखं यदि परिहर गृहजनं बहुगुणयुक्तमपि ।। )

इति चूलिका ।।

अथ सौराष्ट्रा ।

व्यत्ययस्तार्घा दोहैव सौराष्ट्रा । यथा—

सो माणिअ पुण्मन्त जासु मत्त पण्डिअ तनअ ।
जासु घरिणि गुणमन्ति सो वि पुहवि सगाहणिलअ ।।
( स मान्यः पुण्यवान्यस्य भक्तः पण्डितस्तनयः ।
यस्य गृहिणी गुणवती सोऽपि पृथिव्यां स्वर्गनिलयः ।। )

इति सौराष्ट्रा ।।

अथ काहलिः ।

सगणभगणनतर्लघवो गणा गुरुश्चैको यत्र प्रतिपदम् एकादशाक्षर-श्चतुर्दशमात्रकश्च स काहलिः यथा—

उच्चउत्थाणअ बिमलघरा तरुणी घरिणी विणअपरा ।
बित्तकपूरलमुद्दघरा बरिसा समआ सुक्खकरा ।।
(उच्चोत्थानकं विमलं गृहं तरुणी गृहिणी विनयपरा ।
वित्तपूरितं मुद्रागृहं वर्षासमयः सुखकरः ।। )

इति काहलिः ।।

अथ मधुभारतम् ।

तत्र जगणान्तौ चतुर्मात्रौ ( गणौ ) प्रतिपादं तन्मधुभारतम् । यथा—

जासु चन्द सीस पिन्धणअ दीस ।
सो संभु पेउ महासुख देउ ।।

नारायणी

( यस्य चन्द्रः शीर्षे परिधानं च दिशः ।
स शंभुः पातु महासुखं ददातु ।। )

इति मधुभारतम् ।।

---

अथाभीरः

यत्र पादे जगणमन्ता एकादशमात्राः स आभीरः । यथा—

सुन्दरि गुज्जरणारि लोअण दीहबिसारि ।
पीणपओहरभार लुल्लई मोत्तिअहार ।।
( सुन्दरी गुर्जरनारी लोचनं दीर्घविसारि ।
पीनस्तनभारे लोलते मौक्तिकहारः ।। )

इत्याभीरः ।।

---

अथ दण्डकाहलः ।

चत्वारश्चतुर्मात्रस्ततः षण्मात्रस्ततश्चतुष्कलो गुरुश्चेति द्वात्रिंशन्मात्रा यदा तदा दण्डकाहलः । सर्वा अस्मिन्मात्राः १२८ । यथा—

राअह भग्गन्ता दिगन्तलगन्त परिहरि हअगअघररमणी,
लोरहि भरु सरबरु पअपरुपरिकरु लोटइ पडिअतनु धरणी ।
पुणु उट्ठइ संभरि करदत्तग्गुलिबालतरणअकरजमलकरे,
कासीसर राआ णेहलुकाआ करु माआ पुण थप्पि धरे ।।
(राजानो भग्ना दिगन्तरलग्नाः परिहृत्य हयगजगृहरमणीः,
रोदनैर्भृत्वा सरोवरं पादपतितपरिकरा लोटन्ते पतिततनवो धरण्याम् ।
पुनरुत्तिष्ठन्ति सम्भृत्य करदत्ताङ्गुलिबालतनयकरयमलधराः,
काशीश्वरो राजा स्नेहलकायः कृत्वा मायां पुनः स्थापयित्वा धृतवान् ।। )

इति दण्डकाहलः ।।

---

नारायणी

अथ दीपकम्

आदौ गुर्वन्तश्चतुष्कलस्ततो गुर्वन्तः पञ्चकलस्तत एको लघुरित्येवं पादघटितं दीपकम् । यथा—

जसु हत्थ करबाल बीपक्खकुलकाल ।
सिर सोह बरछत्त संपुण्ण ससिमत्त ॥
(यस्य हस्ते करवालो विपक्षकुलकालः ।
शिरसि शोभते वरच्छत्रं सम्पूर्णशशिवत् ॥)

इति दीपकम् ॥

अथ सिंहावलोकः ।

यद्यौ चतुष्कलसगणौ ततः षट् कला गुरुश्चेति षोडशमात्रापादः सिंहावलोकः । यथा—

हणु उज्जरगुराअ दलं दलदलिअ चलिअ मरहठ्ठबलम् ॥
बलमोलिअमालअराअकुला कुलउज्जकलचुलिकण्णफुला ॥
(हतमुज्ज्वलगुर्जरराजदलं, दरदलितचलितं महाराष्ट्रबलम् ।
बलमोटितमालवराजकुलः, कुलोज्ज्वलः कलचरिः कर्णः स्फुरति ॥)

इत्यलम् ।

इति सिंहावलोकः ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां
वृत्तरत्नाकरव्याख्यायां पञ्चमोऽध्यायः ॥



# षष्ठोऽध्यायः

**प्रस्तारो नष्टमुद्दिष्टमेकद्वयादि लगक्रिया ।**
**सङ्ख्या चैवाध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥१॥**

## सेतुः

अथ प्रागुक्तछन्दसां भेदादिज्ञानाय षट् प्रत्ययानाह प्रस्तार इति । छन्दसां भेदादिप्रत्यायकत्वात् प्रत्ययाः ।

अथ नष्टादीनां प्रस्तारज्ञानाधीनत्वादादौ प्रस्तारमाह-पादे इत्यादि

## नारायणी

एवं समादिवृत्तत्रयमभिधायेदानीं तेषामुत्पत्तिप्रदर्शनायाऽनुक्तानां च वृत्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये प्रस्तारादयः षट्प्रत्यया व्याख्यातव्याः । प्रतीयते सङ्ख्यादिकमेभिस्ते प्रत्ययाः । सम्भावितेषु वृत्तेषु विश्वासापरपर्यायप्रत्ययख्यापकत्वाद्वा । ते च प्रस्ताराद्याः षट् । तदुक्तम् प्रस्तार इति ।

तत्र नष्टोद्दिष्टादीनां प्रस्तारज्ञानाधीनत्वात्प्रस्तारं तावदाह—

प्रस्तार्यवृत्तजातिपादस्थवर्णसङ्ख्याकसर्वगुरौ पादे लिखिते सति

## बालक्रीड़ा

अब छठे आध्याय की टीका लिखते हैं। इस प्रकार विभिन्न वृत्तों के लक्षण बतलाये अब उन वृत्तों की उत्पत्ति को दिखाने के लिए प्रसार आदि षड् प्रत्ययों को कहते हैं। प्रस्तार नष्ट उद्दिष्ट एकद्वयादिलगक्रिया संख्या एवं अध्वयोग ये ६ प्रत्यय माने गये हैं। प्रत्यय का अर्थ है जिससे छन्दों की प्रतीति होती है वे प्रत्यय हैं। यानी एकाक्षर चन्दों का फैलाव कितना होगा इनके स्वरूप कैसे

**पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।**
**यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥२॥**

सेतुः

पद्यद्वयेन । आद्यपङ्क्तौ सर्वगुरौ पादे लिखिते ततो द्वितीयपङ्क्तौ प्रथमपङ्क्तिस्थप्रथमगुरोरधो लघु लिखित्वा अवशिष्टपादाक्षराणि प्रथमपङ्क्तिस्थाक्षरतुल्यानि लिखेत् । अथ तृतीयपङ्क्तौ द्वितीयपङ्क्तिस्थगुरूणां मध्ये आद्यगुरोरधो लघुं लिखित्वा अवशिष्टानि पादाक्षराणि द्वितीयपङ्क्तिस्थक्षारतुल्यानि लिखेदित्येवमेव लेखनबिधि पुनः पुनश्चतुर्थ्यादिपङ्क्तिषु कुर्यादित्यर्थः । ननु द्वितीयादिपङ्क्तौ पादवर्णेषु आद्यस्य वर्णस्य गुरुत्वाभावे

नारायणी

तत्राद्यात्प्रथमाद् गुरोरधो लघुं स्थापयेत् । प्रथमत्वं च गुर्वपेक्षया न तु वर्णाऽपेक्षया । तथात्वे हि द्वितीयभेदे आद्यगुरोरभावत् तृतीयभेदानुपपत्तेः । तं लघुं न्यस्य यथोपरि पङ्क्तौ तथैवाधस्तनाधस्तनपङ्क्तौ, शेषं पादवर्णसङ्ख्यापूर्त्यवधि द्वितीयादिकं गुरुं लघुं वा लिखेत्, यत्रोपरि गुरुस्तत्राधस्तादपि गुरुर्यत्रोपरि लघुस्तत्राधस्तादपि लघुरित्यर्थः । भूयः पुनरमुं पूर्वोक्तं विधिं लेखनरूपं कुर्यात्तृतीयादि पङ्क्तौ गुरुमध्ये आद्यगुरोरधो लघुः शेषं चोपरिवदेवेत्यर्थः ॥ २ ॥

बालक्रीडा

होंगे इसके जानने के तरीके का नाम प्रस्तार है। जैसे ६ अक्षरों वाली गायत्री छन्द है। इसके केवल त्यौ स्तस्तनुमध्या १ शशिवदना न्यौ २ विद्युल्लेखा मो मः ३ एवं त्सौ चे द्वसुमती इन छन्दों के नाम और लक्षण लिखे हैं। किन्तु प्रसार के अनुसार इस के ६४ ही भेद होते हैं इस से कम या बेशी नहीं हो सकते हैं। इन के नाम और लक्षण को नहीं कहा है। यदि यह जिज्ञासा हो जाय कि इसके ये ६४

ऊने दद्यादगुरूनेव यावत्सर्वलघुर्भवेत् ।

सेतुः

तस्याधस्तृतीयादिपङ्क्तिषु किं विलेख्यमित्याशंक्याह-ऊन इति। द्वितीयादिपङ्क्तिस्थगुरुषु आद्यगुरोरधस्तृतीयादिपङ्क्तौ लिखिताल्लघोःपूर्वस्मिन् स्थाने गुरूनेव लिखेदित्यर्थः। प्रस्तारस्यावधिमाह-यावदिति—अत्र पादे इत्युपलक्षणम्। तेन अर्द्धसमवृत्तेऽर्द्धे इति विषमवृत्ते श्लोके इत्यपि ज्ञेयम्। यदाहुः—अर्द्धसमप्रस्तारेऽर्द्धप्रस्तार इत्यादि। प्रस्तारविधिमुपसंहरति। प्रस्तारोऽयमिति। प्रस्तरणं प्रस्तारः। यस्तु प्रस्तार्यतेऽनेनेति प्रस्तार इति तच्चिन्त्यम्। सोऽयं छन्दःशस्त्राबोद्धृभिरुक्त इत्यर्थः।

नारायणी

एवं सति तृतीये भेदे आद्यस्थानस्य शून्यत्वात् तत्र किं लेख्यमित्यत आह—

ऊने न्यूने स्थाने गुरूनेव दद्याल्लिखेत्। बहुवचनमुत्तरोत्तरपङ्क्तावपि न्यूने गुरूणां प्राप्त्यर्थम्। ततश्च भूयःशब्दोऽपि वीप्सार्थो ज्ञेयः। तेन पुनः पुनर्गुर्वपेक्षया आद्याद् गुरोरधो लघु लिखित्वा शेषमुपरिवदेव सम्पाद्य ऊने

बालक्रीड़ा

भेद कैसे होते हैं इनका स्वरूप क्या है तो इसके लिए तरीका यह है कि पहले सर्वगुरु वाला पद लिखे। इसके वाद दूसरी पंक्ति में पहले यदि ऊपर गुरु हो तो गुरु लिखे और यदि लघु हो तो लघु लिखे। फिर तीसरी पंक्ति लिखने के लिए दूसरी पंक्ति में जो पहला गुरु है उसके नीचे लघु को लिखे उसके बाद दाहिनी तरफ ऊपर लिखे हुए गुरु के नीचे लघु लिखे। शेष को ऊपर लिखे गुरु एवं लघु के अनुसार गुरु के अनुसार नीचे गुरु लिख दे। किन्तु बाँई तरफ खाली जगह में गुरु को ही लिखे। इस विधि को बार २ तबतक करे जब तक अन्तिम पाद में सर्वलघु न हो जाय। जब सर्वलघुपाद हो जाय तब उस क्रिया को छोड़ के इस प्रक्रिया को छन्द के जानकारों ने प्रस्तार कहा है।

प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥३॥

सेतुः

तत्रोक्ताया द्वौ भेदौ स्पष्टावेव ( S, S ) अत्युक्तायाश्चतुर्भेदः प्रस्तारो यथा।
(SS IS SI II ) मध्याया अष्टभेदः प्रस्तारो यथा—
(SSS ISS SIS IIS SSI ISI SII III) एषामेवा-
ष्टभेदानां क्रमेण म य र स त ज भ न इत्यष्टौ संज्ञाः प्रागभिहिताः।
एवं प्रतिष्ठादीनां षोडशादि भेदा भवन्ति। इति पूर्वपूर्वजात्यपेक्षयो-
त्तरोत्तरजातेर्द्विगुणा भेदा ज्ञेयाः। एकाक्षरादि षड्विंशत्यन्तजातेः
प्रस्तारपिण्डसंख्या उक्ता "वृत्तमौक्तिके"।

षड्विंशतिः सप्तशतानि चैव तथा सहस्त्राण्यपि सप्तपंक्तिः।
लक्षाणि हग्वेदसुसम्मितानि कोटयस्तथा रामनिशाकरैः स्युः। इतिः।
१ ३ ४ १ १ ७ ७ २ ६

प्रस्तारक्रमे बीजं नोचुः प्राञ्चोऽत्र यद्यपि।
स्पष्टतायास्तथाप्यस्मिन् वदामि सुधियां मुदे।

नारायणी

प्रस्तारकरणेऽवधिमाह-यावदिति। सर्वलघुः पादः
स्थाने गुरवो देया इत्यर्थः प्रस्तारोक्तिमुपसंहरति-प्रस्तारो-
प्रस्तारो वा यावद्भवति तावदेवं कुर्यात्। प्रस्तार्यतेऽनेन च्छन्द इति वा छन्दो-
यमिति। प्रस्तार्यते इति प्रस्तारः। प्रस्तार्यतेऽनेन च्छन्द इति वा छन्दो-
विचितिश्छन्दःशास्त्रम्। तदुक्तम्—

बालक्रीड़ा

जैसे तीन अक्षरवाले छन्द का प्रस्तार कहते हैं। पहले सर्व गुरु
वाला SSS प्रथम पाद लिखें। बाद में दूसरी पंक्ति में प्रथम गुरु के
नीचे लघु लिखे शेष स्थान में ऊपर के अनुसार SS गुरुओं को
लिखे। तीसरी पंक्ति में गुरु द्वितीय पंक्ति का द्वितीय गुरु है
इसके नीचे लघु लिखे फिर दाहिनी ओर ऊपर के अनुसार लिखे।
किन्तु इस लिखे हुए लघु के पहिले खाली स्थान में गुरु को लिख दें

## नारायणो

स्थापयेल्लघुरधो गुरोः पुरः
स्याद्यथोपरि तथैव पूरयेत् ।
पश्चिमं च गुरुभिः पुनः पुनः
सर्वलघ्ववधिरित्ययं विधिः ।। इति ।।

तदिदमुक्तादौ योज्यते । तत्रोक्तायां यथा —S, I, (२) तस्या द्विविकल्पत्वात् । अत्युक्तायां यथा—SS, IS, SI, II (४) । मध्यायां यथा—SSS, ISS, SIS, IIS, SSI, ISI, SII, III, (८) एते मगणादय एव सिद्धयन्ति । चतुरक्षरायां प्रतिष्ठायां यथा—SSSS, ISSS, SISS, IISS, SSIS, ISIS, SIIS, IIIS, SSSI, ISSI, SISI, IISI, IISII, SIII, IISSII, IIII, (१६) एवं सर्वेषां समवृत्तानां प्रस्तारे कृते पूर्वपूर्वापेक्षया उत्तरोत्तरस्य द्विगुणा भेदा भवन्ति । अत्र मामकः सङ्ग्रहश्लोकः—

पादं सर्वगुरुं लिखेन्मुखगुरोश्चाधो लघुं पूर्वव
च्छेषं मूलगुरोः पुनर्लघुमथो शेषं पुनः पूर्ववत् ।।
ऊने न्यस्य गुरूनशेषलघुकं पादं च यावत्पुनः
कार्योऽयं विधिरित्यचीक्लृपदमुं नारायणः प्रस्तृतिम् ।।

इति समप्रस्तारः ।।

### अथार्धसमप्रस्तारः

अर्धसमेषु तत्रार्धस्यैव पादतां प्रकल्प्य प्रस्तारः कार्यः, पाद इत्यस्योपलक्षणत्वात् । तदुक्तम्—'अर्धसमस्य प्रस्तारेऽर्धप्रस्तारः कार्यः' इति । तद्यथा—द्व्यक्षरपादे च्छन्दसि पादद्वयरूपस्यार्धस्य पादताकल्पनया चतुरक्षरपूर्वोक्तप्रस्तारवत्प्रस्तारे द्व्यक्षरच्छन्दसः षोडश भेदाः । अत्र प्रथम

### बालक्रीड़ा

इस तरह करने से तीन अक्षरों वाले छन्द के आठ भेद बने । जिनका स्वरूप यह है—

S I ये २ भेद एकाक्षर छन्द के होते हैं । S S I S S I II ये चार भेद द्व्यक्षर छन्द के होते हैं ।

## सेतुः

सर्वगुरुपादस्य भेदविवक्षायां द्वितीयपंक्तौ प्रथमस्थान एवोपस्थितत्वाद् गुरुनिरासपूर्वकं लघुप्रयोगेण सर्वगुरुपादो भिद्यते इति तस्यादौ कल्पना। ततस्तृतीयपंक्तौ द्वितीयस्थाने गुरुनिरासपूर्वकंलघुप्रयोगाद् द्वितीयो भेदः। अस्यैव च शेषभृतश्चतुर्थपंक्तिस्थस्तृतीयो भेद इति तस्य कल्पनम्। ततः पञ्चमपंक्तौ स्तृतीयस्थाने तथैव लघुप्रयोगाच्चतुर्थस्य अस्यैव च द्विगुर्वादिस्त्रयो भेदाः। लघुगुर्वादि

## नारायणो

SSSS, षष्ठ ISIS, एकादश SIS।, षोडशानां IIII, भेदानां समवृत्तभेदत्वेनार्धसमभेदकत्वात्तान्परित्यज्य शुद्धार्धसमप्रस्तारः सिद्धो भवति। तदुक्तम्-प्रस्तुतभेदकारी बिकल्पः प्रस्तारक्रमायातोऽपि वर्जनीयः' इति। संङ्ख्यायां तु गणना कार्यैव। अन्यथा नष्टोद्दिष्टाद्यसिद्धेः। ततश्च द्वादश शुद्धार्धसमभेदाः। यथा—ISSS, SISS, IISS, SSIS, SIIS, IIIS, SSSI, ISSI, IISI, SSII ISII, SIII, एवमन्यत्रापि योज्यम्

इत्यर्धसमप्रस्तारः॥

---

अथ विषमप्रस्तारः।

विषमाणां तु प्रस्तारे पादचतुष्टयात्मकस्य च्छन्दसः पादस्थानीयत्वं प्रकल्प्य प्रस्तारः कार्यः। उक्तं हि-विषमप्रस्तारे पादचतुष्टयस्य प्रस्तारः कार्यः' इति। यथा द्व-चक्षरस्य विषमवृत्तस्य पादकल्पनायां सर्वगुरोः SSSSSSSS पूर्ववदाद्यगुरोरधो लघुं विन्यस्य यथोपरीति गुरुसप्तकं लिखित्वा भूयः कुर्यादिति द्वितीयप्रस्ताराद्यगुरोरधो लघुं परतो यथोपरीति कृत्वा ऊने गुरून्दद्यात्। एवं सर्वलघु प्रस्तारं यावत्कृते षट्पञ्चाशदधिकं शतद्वयं भेदाः। तेषां मध्ये पूर्ववत्समार्धसमरूपत्वेन प्रस्तुतविषमप्रस्तारभेदकारित्वात्प्रथमः द्वितीयाच्च सप्तदशः सप्तदशोऽन्त्यं यावद्वर्जनीयाः। ते च यथा-प्रथमः S S,

### सेतुः

गुरुलघ्वादि लघुद्वयादिश्च । इतीत्थ सर्वगुरुणा प्रथमेन सहितेषु मध्यमाया अष्टभेदेषु एषु क्रमे बीजमुक्तम् । एवं प्रतिपादं प्रस्तारक्रमेऽप्युन्नेयम् ।

अथ मात्राप्रस्तारः । तत्र प्रथमपंक्तौ स्याद् गुरुपादस्तु पूर्ववत् ।
द्वितीयपंक्तौ प्रथमादधो न्यस्यो लघुर्गुरोः । १ ।
यथोपरि तथा शेषमूनस्थाने लघुं न्यसेत् ।
तृतीयादिषु पंक्तिष्वप्येवमेव गुरोरधः । २ ।

### नारायणी

ऽ ऽ ऽ ऽ ऽ ऽ, अष्टादशः । ऽऽ ऽ।ऽ ऽऽ, पञ्चत्रिंशः ऽ।ऽऽऽ।ऽः द्विपञ्चाशः ।।ऽऽ।।ऽऽ एकोनसप्ततिः ऽऽ।ऽऽऽ।ऽ, षडशीतिः ।ऽ।ऽ ऽ।ऽ, त्र्यधिकशतं ऽ।।ऽऽ।।ऽ त्रिंशत्यधिकशतं ।।ऽ।।।ऽ।, सप्तत्रिंशदधिकशतं ऽऽऽ।ऽऽऽ।, चतुःपञ्चाशदधिकशतं ।ऽऽ।।ऽऽ।, एकसप्तत्युत्तरशतं ऽ।ऽ।ऽ।ऽ।, अष्टाशीत्यधिकशतं ।।ऽ ।।ऽ।, पञ्चोत्तरद्विशतं ऽऽ। ऽऽ।। द्वाविंशत्युत्तरद्विशतं ।ऽऽ।।।ऽ।।, एकोनचत्वारिंशदधिकद्विशतं ऽ।।ऽ।।।, षट्पञ्चाशदधिकद्विशतसङ्ख्या । । । । । । । ।, एवं षोडश । एषां मध्ये प्रथम ऽऽऽऽऽऽऽऽ, षष्ठ ।ऽऽ।ऽ।ऽ, एकादश ऽ।ऽऽ।ऽ।, षोडश । । । । । । । समभेदाः । अन्ये द्वादशार्धसमभेदाः । शेषाश्चत्वारिंशदधिकशतद्वयं शुद्धविषमभेदाः । एवं सर्वत्र विषमेषु प्रस्तारभेदो ज्ञेयः ।

इति विषमप्रस्तारः ॥

---

### अथ मात्राप्रस्तारः ॥

मात्राप्रस्तारे तूपरिपङ्क्तौ यथायोग्यं मात्राद्वयस्थाने एकैकगुरुक्रमेण गुरू लिलिखित्वा प्रथमगुरोरधो लघुं लिखित्वा शेषमुपरिपङ्क्तिवत्कुर्यात् । एवं सत्येका मात्रा न्यूना भवति, सा लघोः पूर्वं लघुरूपेण देया । तृतीयपङ्क्तौ प्रथमगुरोर्लघुं दत्त्वा शेषमुपरिवल्लिखित्वा न्यूनास्तिस्रो मात्राः, ता लघुगुरुरूपेण लघोः पूर्वं देयाः । एवं क्रमेणाद्यगुरो-

## सेतुः

लघुं न्यस्यावशिष्टं तु पूर्ववत् परिकीर्तितम् ।
न्यूने मात्रात्रये देयस्तस्मिन्नादौ गुरुर्द्वयोः । ३ ।
कलयोः स्यात्ततः पूर्वं लघुर्देयो भवेत्ततः ।
चतुर्थपंक्तावप्येवं पञ्चम्यान्तु गुरोरधः । ४ ।
लघुद्वयं लिखेत्पूर्वं शिष्टन्तूपरिवद् भवेत् ।
एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः । ५ ।
तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी ।
सर्वान्तमध्यादिगुरु चतुर्लघुगणाः स्मृताः । ६ ।

## नारायणी

रधो लघौ दत्ते उपरिवच्छेषे लिखिते शेषा मात्रैका चेदाद्यलघोः पूर्वं लघुरूपेण देया । द्वे चेच्छेषे तदा तत एव पूर्वं गुरुरूपेणैव । एवं युग्मा गुरुरूपेणैवेति । तिस्रश्चेत्तदा एको लघुरेको गुरुश्चेति । पञ्च चेत्तदा एको लघुर्द्वौ गुरू चेत्येवंक्रमेण सर्वलघु प्रस्तारपर्यन्तं लिखेत् अत्रैवं कृते पूर्वोक्तषट्कलत्रयोदशगणप्रस्तारः यथा—SSS, IISS, ISIS, SIIS, IIIIS,

## बालक्रीड़ा

| | | |
|---|---|---|
| १ | SSS | मगण |
| २ | ISS | यगण |
| ३ | SIS | रगण |
| ३ | IIS | सगण |
| ५ | SSI | तगण |
| ६ | ISI | जगण |
| ७ | SII | भगण |
| ८ | III | नगण |

ये आठ भेद त्र्यक्षर छन्द के होते हैं जो कि छन्दः शास्त्र में मगणादि आठ गणों के नाम से प्रसिद्ध हैं । इनका स्वरूप भी यही है इनमें यह भी अकाट्य नियम है कि १ एकादिषड्विंशति २६ अक्षर पर्यन्त के भेद पहले की अपेक्षा से दूने होंगे । जैसे एक के दो भेद । २ के ४ भेद । ३ के आठ भेद । ४ के १६ भेद । ५ के ३२ भेद । ६ के ६४ ।

## सेतुः

मूलकृताऽपि प्रथमेऽध्याये उक्ताः। एषां नामान्यपि प्राकृतपैङ्गले उक्तानि।

गुरु द्वयं ऽऽ अ अ रणो गुरुरन्ते ।।ऽ कर अल्लोपयोः। हरंमि गुरु मज्झे ।ऽ।, आदि गुरु ऽ।ऽ वसुचरणे विप्पो स घ हि लघु राहिः। त्रिगुरुपादादावपि त्रयोदशादि भेदा भवन्ति। स्वयमूह्याः। इति मात्राप्रस्तारः : । ३ ।

अथ एकाक्षरप्रभृतिप्रस्तारे द्वितीयादिवृत्तस्य नष्टस्य स्वरूपज्ञानार्थं नष्टमाह—

## नारायणी

।ऽऽ।, ऽ।ऽ।, ।।।ऽ।, ऽऽ।।, ।।ऽऽ।।, ।ऽ।।। ऽ।।।।, ।।।।।।, ( १३ ) पञ्चकलस्य सर्वगुरुभेदाभावादादिलघ्वाद्या एव भेदाः। यथा—।ऽऽ, ऽ।ऽ, ।।।ऽ, ऽऽ।, ।।ऽ।, ।ऽ।। ऽ।।।, ।।।।। ( ८ ) एवमन्यत्रापि। विषमकलप्रस्तारेष्वादौ लघुं दत्त्वा प्रस्तारः कार्य इति ॥ ३ ॥

इति प्रस्तारः ॥

## बालक्रीड़ा

७ के १२८। ८ के २५८ होते हैं इत्यादि प्रकार हैं।
चतुरक्षर छन्दों का प्रकार—

| | | |
|---|---|---|
| ऽऽऽऽ | १ | पहले भेद में ४ गुरु। |
| ।ऽऽऽ | २ | पहले भेद में प्रथम गुरु के नीचे लघु लिखकर फिर सब गुरु है। |
| ऽ।ऽऽ | ३ | दूसरे भेद के प्रथम गुरु के नीचे लघु खाली में गुरु बाकी में जसका तस। |

## बालक्रीड़ा

| | | |
|---|---|---|
| I I S S | ४ | तीसरे भेद के प्रथम गुरु के नीचे लघु बाँकी जस के तस। |
| S S I S I | ५ | ४ भेद के ३ रे गुरु के नीचे लघु लिखें खाली में २ गुरु फिर ऊपर के जस का तस। |
| I S I S | ६ | ५ भेद के १ म गुरु के नीचे लघु लिखें। खाली नहीं है अतः उसको जस के तस। |
| S I I S | ७ | ६ भेद के दो गुरु के नीचे लघु बांकी जस का तस। खाली में गुरु लिखें। |
| I I I S | ८ | ७ भेद के १ म गुरु के नीचे लघु ब की ऊपर के जस के तस लिखें। |
| S S S I | ९ | ८ भेद के ४ गुरु के नीचे लघु फिर खाली में गुरु लिखें। |
| I S S I | १० | ९ भेद के १ म गुरु के नीचे लघु लिखें बांकी ऊपर के जस |
| I I S I | ११ | १० भे. २ गुरु के के नीचे लघु लिखें खाली में गुरु बांकी ऊपर के जस के तस। |
| I I S I | १२ | ११ भे. १ गुरु के नीचे लघु लिखें बांकी जस के तस। जस के तस लिखें। |
| S S I I | १३ | १२ भे. गुरु के नीचे लघु खाली में गुरु बांकी में ऊपर के जस के तस। |
| I S I I | १४ | १३ भे. में १ गुरु लिखें बांकी में ऊपर के तरह जस के तस। |
| S I I I | १५ | १४ भे. दूसरे में गुरु के नीचे ल. लिखें खाली में गरु बांकी में जस के तस। |
| I I I I | १६ | १५ भे. में १ म गुरु के नीचे ल. लिखें बांकी में ऊपर के तरह जस के तस। |

**नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः।**
**विषमे चैकमाधाय तस्यार्धेऽर्धे गुरुर्भवेत् ॥४॥**

सेतुः

नष्टस्येति। नष्टस्य वृत्तस्य योऽङ्कः तस्मिन् समे सति लो लघुर्लेख्यः। तस्य नष्टवृत्ताङ्कस्यार्द्धे कृते सति योऽर्द्धेऽङ्कः तस्मिंश्च समे सति लघुर्बोध्यः। नष्टस्याङ्के विषमे सति गुरुर्लेख्यः। तदुत्तरं विषममङ्कमेकेन संयोज्य योऽङ्को जातस्तस्यार्द्धे कृते सति तस्मिन् विषमे सति गुरुर्लेख्यः। समे तु लघुरिति वृत्ताक्षरसंख्यापूरणं यावत् पुनः कुर्यादित्यर्थः। विषमाङ्कस्यार्द्धीकरणाशक्तेरधिकैकांकेन संयोजनं कृतम्। अत्रोदाहरणम्—त्र्यक्षरप्रस्तारे द्वितीयो वृत्तभेदः कीदृगिति प्रश्ने—द्वितीयस्य समाङ्कत्वादादौ लघुं न्यस्य ततो द्वित्वसंख्याया अर्द्धे

नारायणी

अथ नष्टम्।

अथ प्रस्तारपरिशोधनोपयोगि नष्टमाह—

अङ्क इत्यतः परं तत्रेत्यध्याहर्यम्। ततश्च नष्टस्य वृत्तस्य योऽङ्कस्तत्र समे सति लो लघुर्लेख्यः, तस्य चार्धेऽर्धे कृतेऽर्धाङ्के समे सति लघुर्विषमे त्वर्धीकरणाशक्तेरेकमधिकं क्षिप्त्वार्धयेत्। नष्टस्याङ्के विषमे सति गुरुर्भवेल्लेख्य इत्यर्थः, तदनन्तरं तस्मिन्विषमे एकमधिकमाधाय संयोज्य योऽङ्को जातस्तस्यार्धे विषमे सति गुरुः, समे तु लघुः। विषमे

बालक्रीड़ा

अब प्रस्तार शोधन के उपयोगी नष्ट को कहते हैं।

जैसे किसी ने पूछा कि तीन अक्षर के छन्द का चौथा स्वरूप कैसा है तो प्रश्नका अंक ४ सम है अतः एक लघु लिखा फिर उस ४का आधा २ सम है अतः लघु लिखा। फिर दो का आधा १

## सेतुः

मेकसंख्या तस्या विषमत्वाद् गुरुं न्यस्य ततस्तस्या एकरूप विषम-संख्याया एकेन संयोजने जातोऽङ्को द्वितीयस्तस्यार्द्धमेकसंख्या । तस्या अपि विषमत्वाद् गुरुमेव न्यसेत् । इति आदिलघुर्यो गणो द्वितीयो भेदो यथा ।SS, तथास्यैव तृतीयो भेदः किं स्वरूपः इति प्रश्ने तृतीयस्य विषमत्वाद् गुरुं न्यस्य ततः सैकस्य तस्यार्द्धं द्वयं, तस्य समत्वाल्लघु

## नारायणी

त्वर्धीकरणाशक्तेरेकमधिकं प्रक्षिप्यार्धयेत् । तस्मिन्नर्ध्यर्धे विषमे गुरुः समे लघुरित्येवं विवक्षितनष्टवृत्ताक्षरसङ्ख्यापूरणं यावत्कुर्यात् । अर्धेऽर्धे इत्युभयत्र वीप्सया पुनः पुनः करणं सूचितम् । यथा त्र्यक्षरे पञ्चमं वृत्तं कीदृगिति प्रश्ने कृते पञ्चमाङ्कस्य विषमत्वाद् गुरुं विन्यस्य सैकस्यार्धे त्र्यङ्कस्य विषमत्वाद् गुरुरेव । पुनः सैकस्यार्धे द्वयङ्कस्य समत्वाल्लघुरिति । यथा—SSI, सोऽयं पञ्चमस्तगणः । समोदाहरणं यथा—चतुरक्षरप्रस्तारे चतुर्थं वृत्तं कीदृगिति प्रश्ने समत्वाल्लघुस्त-दर्धेऽङ्के द्वयङ्के पुनर्लघुः शिष्टे द्वयङ्केऽर्धित एकस्याऽसमत्वाद् गुरुः शिष्टे-काङ्के सैकेऽर्धिते पुनर्गुरुर्यथा—IISS, एवं सर्वत्र प्रथमे भेदे प्रथमा-ङ्कस्य विषमत्वात्समार्धतायामपि विषमत्वात्सर्वगुरुता ।

इति वृत्तनष्टम् ॥

## बालक्रीड़ा

१ विषम है अतः गुरु लिखा । इस तरह तीन अक्षर वाले मध्या छन्द के चौथे भेद का स्वरूप IIS ऐसा हुआ ।

किसी ने पूछा कि चार अक्षरों वाले प्रतिष्ठा छन्द के ५ वें भेद का स्वरूप क्या है । तो विस्तृत छन्द के प्रश्न का अंक ५ विषम है अतः इसका आधा हो नहीं सकता है इसलिए इस में एक मिलाया तो

## सेतुः

न्यस्य ततस्तस्यार्द्धस्यैकरूवत्वेन विषमत्वाद् गुरुं न्यसेदिति मध्यलघु रगण स्तृतीयो भेद इति। एवं सर्वः प्रस्तारः शोधनीयः। वर्णनष्टेष सर्वत्रैवं द्रष्टव्यम्। अथ मात्रानष्टं यथा चतुःकलप्रस्तरे द्वितीयः कीदृग् भेद इति प्रश्ने चतस्रः कलाः पृथक् स्थाप्याः तासु प्रथमायामेकाङ्को देयः। द्वितीयायां द्व्यङ्कः। एकांकद्व्यङ्कावेकीकृत्य जातस्त्र्यङ्कस्तृतीयायां

द्व्यङ्कत्र्यङ्कावेकीकृत्य जातः पञ्चाङ्कश्चतुर्थ्यां यथा

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| । | । | । | । | । |

पृष्टांक मन्तिमकलोपर्यङ्के लोपयेत्। तत्रावशिष्टे पूर्वपूर्वाङ्कं यथासम्भवं लोपयेत्। यस्य अङ्कस्य लोपस्तदधस्तन्मात्रा परया मात्रया सह गुरुत्व

## नारायणी

### अथार्धसमनष्टम्।

अर्धसमानां तु नष्टे पूर्वोदाहृतद्व्यक्षरपादार्धसमप्रस्तारे पञ्चमो भेदः कीदृगिति प्रश्ने पञ्चानां विषमत्वाद् गुरुः, सैकेऽर्धे त्रयाणां विषमत्वात्पुनर्गुरुः सैकेऽर्धे द्वयोः समत्वाल्लघुर्द्वयोरर्धे विषमत्वाद् गुरु रिति सिद्धमर्धम् SS।S द्वितीयार्धेऽप्येवमेव। अत्र यदि समार्धसमयोः संसृष्टत्वं तदा पञ्चत्वम्, यदा तु शुद्धार्धसमगणना तदा प्रथमस्य सर्वगुरो; समत्वात्त्यागे चतुर्थता। नष्टसिद्धिस्तु संवलितसङ्ख्ययैवेत्युक्तं प्राक् एवं सर्वत्रापि।

इत्यर्धसमनष्टम्॥

### अथ विषमनष्टम्।

विषमाणां नष्टे तु द्व्यक्षरविषमवृत्तस्य चतुर्थो भेदः कीदृगिति प्रश्ने उक्तविधाविधाने ।।SSSSSS अयं चतुर्थः। अत्रापि समार्धसमसंवलनेन

## बालक्रीड़ा

६ हो गये। इस ६ का आधा किया तो ३ विषम अंक मिला अतः गुरु लिखा। तीन भी विषम है अतः इस में एक मिलाकर आधा किया तो

## सेतुः

ममायाति । प्रकृतद्वितीयभेदप्रश्नेऽन्तिमे पञ्चमेऽङ्के पृष्टं द्व्यङ्कं विलोप्यावशिष्टे त्र्यङ्के पूर्वं त्र्यङ्कं विलोपयेत्। एवं तृतीयचतुर्थकलोपरि अंकयोर्लुप्तत्वात् तदधस्तनमात्रयोर्गुरुत्वं भवति इत्यन्तगुरुर्द्वितीयो भेदः यथा ऽ । ऽ न्यासः ।

अत्र मदीयः संग्रहः—

संस्थाप्येह पृथङ् मात्रास्तत्र चाङ्कान् समालिखेत् ।
एक द्व्यङ्क तृतीयाङ्कानाद्यमात्रात्रये क्रमात् । १ ।
ततः पूर्वद्वयोन्मिश्रानन्त्ये पृष्टाङ्कलोपनम् ।
पूर्वपूर्वतरस्यापि लोपः सम्भवतो भवेत् । २ ।
यस्य यस्य भवेल्लोप स्तदधोगुरुता भवेत् ।
परया मात्रयेत्थं तन्मात्रानष्टं वदेत्सुधीरिति । ३ । इति नष्टम् । ४ ।

## नारायणी

चतुर्थता, शुद्धविषमभेदेषु तु प्रथमस्य समार्धसमतया त्यक्तत्वात्तृतीयता । एवं सर्वेष्वर्धसमविषमेषु योज्यम् ।

इति विषमनष्टम् ।

---

अत्र मदीयः सङ्ग्रहश्लोकः—

पृष्टाङ्के विषमे समे, गुरुलघू युग्मे तथैकाधिका
युग्मेऽर्धे विषमे समे गुरुलघू भूयोऽवशिष्टेऽधिते ॥

## बालक्रीड़ा

सम आये तो लघु लिखा इस तरह चतुरक्षर छन्द के ५ वें भेद का स्वरूप ऽ ऽ । ऽ यह हुआ । इसमें एक यह भी लाभ है कि प्रस्तार के किसी

## नारायणो

तद्वन्न्यस्य विवक्षितान्गुरुलघून् यावद्विदध्यादिदं
श्रीरामेश्वरभट्टसूनुरकरोन्नष्टे त्रिधामीदृशीम् ॥

अथ मात्रावृत्ते नष्टम् ।

तत्र लाघवार्थं षण्मात्रप्रस्तारे उदाहरणमुच्यते । षण्मात्रप्रस्तारेषु सप्तमस्थाने कीदृशो गणोऽस्तीति प्रश्ने षडपि कलास्तावत्पृथगकस्थाप्य नीयाः । तत्र प्रथमकलोपर्येकाङ्को देयः, द्वितीयकलायां द्व्यङ्क एव, एकाङ्कात्पूर्वं कस्यचिदङ्कस्याभावेनैकीकरणासम्भवात् । एककलोपर्यङ्कं द्वितीयकलोपर्यङ्कं चैकीकृत्य त्र्यङ्कं तृतीयकलोपरि, द्व्यङ्कत्र्यङ्कावेकीकृत्य पञ्चाङ्कं चतुर्थोपरि, त्र्यङ्कपञ्चाङ्कावेकीकृत्याष्टाङ्कं पञ्चमोपरि, पञ्चाष्टौ चैकीकृत्य त्रयोदशाङ्कं षष्ठोपरि विन्यसेत् । यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

एवं सर्वत्र पूर्वपूर्वकलाद्वयोपरिस्थाङ्कमेकीकृत्य परपरकलासु न्यसेत् । एवं कृते पृष्टाङ्कमन्तिमकलोपर्यङ्के लोपयेत् । अवशिष्टाङ्केऽव्यवहितपूर्वपूर्वतरमेवाङ्कं यथासम्भवं लुम्पेत् । तत्र यस्य यस्याङ्कस्य लोपो भवति तत्तदधस्तनकलास्वग्रिमकलामादाय गुरुतामेति । एवं यावत्सम्भवं कुर्यात् । प्रस्तुते पृष्टं सप्ताङ्कं त्रयोदशाङ्के विलोप्यावशिष्टषडङ्केऽष्टौ न लुप्यन्त इति पञ्च लोपयेत्, अवशिष्टे एकाङ्के त्रयो द्वौ वा न लुप्यन्त इति एकाङ्कस्य लोपे शून्यता । एवं कृते पञ्चमैकाङ्कलुप्तत्वात्तदधस्तने मात्रे चतुर्थप्रथमे पञ्चमद्वितीयमात्रे आदाय गुरुतां गच्छतः । एवं कृते सिद्धः षट्कलः सप्तमप्रस्तारः ।

## बालक्रीड़ा

रूप में भूल की शंका हो जाय तो वह भी इस नष्ट की क्रिया से दूर की जा सकती है । नष्टके नियम को याद रखना ही इसका उपाय है।४।

## उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत् ।

### सेतुः

अथ निर्णीतस्वरूपस्य वृत्तस्य स्थानविशेषज्ञानार्थमुद्दिष्टमाह—उद्दिष्टमिति । आद्यमक्षरमारभ्योपरि एकादीनङ्कान् द्विगुणान् लिखेत् । तत्र लघूपरिस्था येऽङ्कास्ते संयोज्या अधिकेनैकाङ्केन सहिताश्च कार्याः । एवं सति योऽङ्को जातस्तत्संख्याकमुद्दिष्टं भवेदित्यर्थः । उदाहरणं त्र्यक्षर प्रस्तारे मध्यगुरुर्जगणः कस्मिन् स्थानेऽस्तीति प्रश्ने न्यासः ।

### नारायणी

नष्टे सर्वाः कलाः कार्या अङ्कन्यासस्तु पूर्ववत् ।
पृष्टोऽङ्कः शेषके लोप्यः परोऽप्यङ्कोऽत्र लुप्यते ॥
यस्य यस्य भवेल्लोपो व्युत्क्रमेण पुनः पुनः ।
तदधो गुरुतामेति परया कलया सह ॥ इति ।

उद्दिष्टस्य रीतेः पूर्वमुक्तत्वापूर्ववदिति । उद्दिष्टवदित्यर्थः । आर्याया मात्रावृत्तत्वादनया रीत्या नष्टसिद्धावपि तन्मात्रविषयो लघुरुपाय आर्या-प्रकरणे प्रसङ्गादस्माभिरुक्तः ॥ ४ ॥

इति नष्टम् ॥

---

अथोद्दिष्टम् ।

अथ प्रस्तारशोधनायोपयुक्तमुद्दिशति—

आद्यादक्षरादारभ्योपर्याद्यादेकाङ्कादारभ्य द्विगुणान्द्विगुणानङ्कानु-त्तरोत्तरं लिखेत् । तत्र लेखने कृते सति लघुलेखोपरिस्था येऽङ्कास्ते-

### बालक्रीडा

एकाक्षरादि छन्दों के प्रस्तार में प्राप्त अमुकछन्द का अनुरूप स्थान कौन सा है । अर्थात् किस संख्या वाला यह छन्द है ।

**लघुस्था ये तु तत्राङ्कास्तैः सेकैर्मिश्रितैः भवेत् ॥५॥**

## सेतुः

| | | |
|---|---|---|
| १ | २ | ४ |
| । | ऽ | । |

अत्रआद्यतृतीयलघोरुपरिस्थावेकचतुरङ्कौ संयोजितौ चेत्पञ्च भवन्ति । ते चैकाङ्केन मिश्रिताः षड्भवन्ति इति तत्संख्याके षष्ठस्थाने जगणोऽस्ति । यत्र तु एक एव लघुर्यथा यगणः स कस्मिन् स्थानेऽस्तीति प्रश्नेऽयं न्यासः

| | | |
|---|---|---|
| १ | २ | ४ |
| । | ऽ | ऽ |

अत्र लघूपरिस्थमेकमंकमेकेन संयोजितं द्वयं भवतीति तत्संख्याके द्वितीयस्थाने । ऽ ऽ यगण इति । अत्रान्यलघोरभावात्तदुपरिस्थीक संयोजनाभावः । एवं सर्वत्र ज्ञेयम् । अथ मात्रोद्दिष्टम् ।

## नारायणी

मिश्रितैर्यथास्थानं योजितैरेकेनाधिकेन सहितैरुद्दिष्टं भवेदिति आद्यद्विगुणशब्दयोरावृत्त्या व्यवहितान्वयेन च व्याख्येयम् । उपरीत्युपलक्षणम् । अधोलेखनेऽव्यक्षतेः । यथा—त्र्यक्षरे प्रस्तारेऽन्तगुरुर्भेदः कतिथ इति प्रश्ने न्यासः—

| | | |
|---|---|---|
| १ | २ | ४ |
| । | । | ऽ |

अत्र लघुस्थैकाङ्कद्वयङ्कमेलने त्रय एकसहिताश्चत्वारो भवन्ति ततश्चतुर्थभेदं कथयेत् । एवं चतुरक्षरे आद्यन्तगुरुः कतिथ इति प्रश्ने न्यासः—

## बालक्रीड़ा

इस आशंका के उत्तर में उद्दिष्ट को किया जाता है । उसका विधान यह है कि जो भी स्वरूप प्रश्नकर्त्ता ने लिखा है इसके प्रथम अक्षर पर एक अंक लिखो उसमें आगे दुगुना करके लिखो इस तरह जितने

## सेतुः

चतुस्कलप्रस्तारे आदि गुरुः कस्मिन् स्थानेऽस्तीति प्रश्ने न्यासः

| | | |
|---|---|---|
| १ | २ | ५ |
| ऽ | । | । |

अत्र गुरुस्थ एकांकोऽन्तिमकलोपरिस्थि पञ्चाकेऽपनेयः। तथा सति तत्राव-शिष्टाश्चत्वार इति चतुर्थमादिगुरुस्थाने प्रकटं भवति। एवं सर्वत्र ज्ञेयम्।

अत्र मदीयः संग्रहः।

## नारायणी

| | | | |
|---|---|---|---|
| १ | २ | ४ | ८ |
| ऽ | । | । | ऽ |

अत्र लघुस्थाभ्यां द्वचङ्कचतुरङ्काभ्यां सैकाभ्यां सप्त भवन्ति, ततः सप्तमोऽयं भेदः। एवं सर्वत्र।

इति समोद्दिष्टम्॥

अथार्धसमोद्दिष्टम्॥

अर्धसमेऽपि चतुरक्षरार्धे ऽऽ।ऽ अयं प्रस्तारः किसङ्ख्याक इति प्रश्ने न्यासः—

| | | | |
|---|---|---|---|
| १ | २ | ४ | ५ |
| ऽ | ऽ | । | ऽ |

## बालक्रीड़ा

अक्षर का छन्द हो उतने अक्षरों पर द्विगुणित करके अंक लिखो। उसमें जो अंक लघु अक्षरों पर हों उनको जोड़कर एक और मिला दो इस से जो संख्या प्राप्त होगी उसी संख्या वाला वह छन्द है

## सेतुः

उद्दिष्टे नष्टवन्नस्यान्मात्राणां स्थापनं पृथक् ।
उद्दिष्टवृत्तप्रस्तारं लिखित्वोपरि विन्यसेत् ।
कलयोराद्ययोरेक द्वयङ्कावन्यकलासु तु ।
पूर्वपूर्वद्वयोर्न्मिश्रानंकानथ गुरूपरि ।
अंकं प्रथममात्राया अपरस्यास्त्वधो गुरोः ।
असंकरार्थमंकानामेकीकृत्य गुरूर्ध्वगान् ।
अंकानपनयेदन्त्ये शिष्टं तूद्दिष्टमुच्यते इत्युद्दिष्टम् । ५ ।

## नारायणी

लघुस्थे चतुरंके सैके पञ्चमो भेदः समार्धसमसंसृष्टतायाम् , शुद्धार्धसमेषु पूर्वन्यायेन चतुर्थः । । एवं सर्वत्र ।

इत्यर्धसमोद्दिष्टम् ।

---

अथ विषमोद्दिष्टम्

विषमेष्वपि द्वयक्षरपादकविषमवृत्ते ।।ऽ ऽ ऽ ऽ ऽ ऽ. अयं भेदः कतम इति प्रश्ने न्यासः । यथा । । ऽ ऽ ऽ ऽ ऽ. (१२८) अत्र लघुस्थावेकद्वयङ्कौ सैकौ चत्वारस्तावत्सङ्ख्याकं समार्धसममेलनेन जानीयात् , शुद्धविषमेषु तु तृतीयम् । एवं सर्वेषु विषमेषु ज्ञेयम् । अत्र सङ्ग्रहश्लोकः—

प्रथमाद् द्विगुणानङ्कान्प्रस्ताराद्यादुपर्यधो वास्येत् ।
लघुगुरुरङ्कैः सैकैर्मिलितैरुद्दिष्टमुद्दिष्टम् ।।

इति विषमोद्दिष्टम् ।

## बालक्रीड़ा

ऐसा जानो । जैसे किसी ने पूछा कि । । ऽ यह मध्या का कौन सा स्वरूप है । ऐसा जानना चाहा उसके उत्तर में समझाते हैं कि यहाँ इन पर क्रमशः एकादि अंक लिखो । उसमें प्रथम अंक के बाद के अंकों के

## नारायणी

### अथ सूत्रोक्तोद्दिष्टप्रकारः।

सूत्रे तूद्दिष्टे प्रकारान्तरमुक्तम्। यद्वृत्तं जिज्ञासेत्तत्तद्वृत्तं भूमौ प्रस्तार्य तन्मध्यस्थलघुषु योऽन्त्यो लघुस्तदुपर्यधो वैकाङ्कं लिखित्वा तत्रैव तं द्विगुणितं कृत्वा द्विगुणयेत्। ततस्तत्पूर्वस्मिन्गुरौ लघौ वा तमङ्कं द्विगुणितं कृत्वा पूर्ववन्न्यसेत्। यदा त्वेवंप्रकारे क्रियमाणे गुरुमापद्यते सङ्ख्या तदा तन्मध्ये एकं त्यक्त्वा पुनरुत्तरोत्तरं द्विगुणितं कृत्वा गुरुस्थाने एकं त्यक्त्वा पुनर्द्विगुणनादिक्रमेण यावत्प्रस्तारपूर्ति कुर्यात्, एवं कृते या सङ्ख्या सम्पद्यते तावतिथं तद् वृत्तं जानीयात्। यथा चतुरक्षरे गुरुलघू द्वौ गुरू चेति वृत्तं कतिथमिति प्रश्ने न्यासः—

| | | | |
|---|---|---|---|
| २ | २ | | |
| ऽ | । | ऽ | ऽ |
| ४ | २ | | |

अत्र लघ्वधःसङ्ख्याङ्कं, द्विगुणितं चतुरङ्कं विलिख्य गुरुस्थसङ्ख्याया एकं जह्यात्। अवशिष्टस्त्र्यङ्कस्तावतिथं वृत्तमिति।

इति सूत्रोक्तोद्दिष्टप्रकारः

### अथ मात्रावृत्ते उद्दिष्टम्

उद्दिष्टवृत्तप्रस्तारं कृत्वा प्रथमकलायां प्रथमाङ्कं दद्यात्, द्वितीयकलायां नष्टन्यायेन द्व्यङ्कम्, ततस्तृतीयकलायामेकद्व्यङ्कौ मेलयित्वा

#### बालक्रीड़ा

द्विगुणित करके लिखना है। अतः १ २ ४ ऐसा लिखो। इस में लघु अक्षरों परके अंकों को जोड़ कर एक मिलाया इससे चौथा स्वरूप यह है ऐसी जानकारी हुई। ५।

वर्णान् वृतभवान् सैकानौत्तराधर्यतः स्थितान् ।

सेतुः

अथ प्रस्तारे सर्वगुर्वादिभेदानां संख्याज्ञानार्थं गुरु लघु क्रिया-रूपं चतुर्थं प्रत्ययमाह—वर्णानित्यादि पद्यद्वयेन । वृत्तसंख्याकान् वर्णान्

नारायणी

त्र्यङ्कम्, चतुर्थ्यां द्वित्र्यङ्कौ मेलयित्वा पञ्चाङ्कमित्येवं पूर्वपूर्वाङ्कद्वयमेलनं कृत्वोत्तरोत्तरकलायां न्यसेन्नष्टवत् । गुरौ तु मात्राद्वयस्य वर्तमानत्वादङ्कसङ्करार्थमेकोङ्क उपरि देयो द्वितीयस्त्वध इति विशेषः । एवमङ्केषु स्थापितेष्वन्त्यकलायां योऽङ्कस्तन्मध्ये गुरुशिरसि स्थिता येऽङ्कास्तानेकीकृत्य पातयेत्, अवशिष्टां सङ्ख्यां पृष्टवृत्तस्थां जानीयात् । यथा—आद्यन्तगुरुः षट्कलप्रस्तारः कतिथ इति पृष्टे न्यासः—

| | | | |
|---|---|---|---|
| १ | ३ | ५ | ८ |
| ऽ | । | । | ऽ |
| २ | | | १३ |

अत्र गुरुशिरस्येकाङ्काष्टांकौ मिलितौ नव तेऽन्त्यकलास्थत्रयोदशस्वपनेयाः अवशिष्टाश्चत्वारः सा सङ्ख्योद्दिष्टप्रस्तारस्य । एवं सर्वेषु मात्रावृत्तेष्वपि ज्ञेयम् ।

इति मात्रोद्दिष्टम् ॥

तदुक्तम्—

पूर्वस्यां प्रथमः समोऽङ्क उपरि स्थाप्यो युगायां द्वयं
संयुज्यैकयुगौ त्रयं त्रिषु कलामूर्ध्नि द्वयेन त्रयम् ॥
एकीकृत्य च पञ्चकं जलनिधावेवं कृते लुप्यते
शिष्टे तद्गुरुमूर्ध्वकांक इतिद्व चेद्दिष्टबोधस्तदा ॥इति॥

आर्यासु तु प्रकारान्तरमपि तत्प्रकरण एवाभ्यधायि ।: ५ ॥

इत्युद्दिष्टप्रकरणम् ॥

## एकादिक्रमतश्चैनामुपर्युपरि निक्षिपेत् ॥६॥

### सेतुः

एकांकान् सैकान् एकेन सहितान् औत्तराधर्यतः उत्तराधरभावेन स्थितान् कुर्यान्नतु नष्टोद्दिष्टवद वृत्ताक्षरक्रमेणेति भावः। एतान् पूर्वोक्तानंकानेक द्वयादि क्रमेणोपर्युपर्यङ्के क्षिपत् प्रथममेकांकद्वितीयेकांकेन सह मेलयित्वा द्वितीयस्थाने द्वयङ्क कुर्यात्। तं तृतीयैकांकेन मेलयित्वा तृतीयस्थाने त्र्यंकं कुर्यादित्येवमुत्तरोत्तरं कर्तव्यम्। उपान्त्यत इति। उपान्त्यमन्त्यसमीपमन्तमन्त्यैकांके तु न मेलयेदित्यर्थः। मेलनस्य प्रथमावृत्तौ सर्वोपरितनस्यान्त्यत्वं द्वितीयावृत्तौ तदधोभूतस्य तृतीयावृत्तौ तदधो-

### नारायणी

अथैकद्वयादिलगक्रिया।

अथोक्तादिषु सर्वगुर्वेकलघुद्विलघुत्रिलघ्वादिपादकवृत्तकथनद्वारा प्रस्तारशोधनायैकद्वयादिलगक्रियमाह—

उक्तादिवृत्तनिष्ठान्वर्णान्वर्णसङ्ख्याकानङ्कान्सैकानेकेनाधिकेन सहितानौत्तराधर्यत उत्तराधरभावेन स्थितान्कुर्यादित्यध्याहारः। औत्तराधर्यत इति 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० सू० ५-१-१२४) इति ब्राह्मणादित्वाद्भावे ष्यञ्। ततस्तसिः। एतान्पूर्वस्थापितानङ्कानेकद्व्यादिक्रमेणोपर्युपर्यङ्के निक्षिपेन्मेलयेत्। मेल्यमानाङ्कसमसङ्ख्याया उपरि क्षेपो मेलनं, न तु स्वस्यैव। स्वरूपतस्तत्स्थाने शून्यत प्रसक्त्या द्वितीयादिमेलनावृत्यभावापत्तेः। अधस्तनमेकांकं तदुपर्येकांके मेल-

### बालक्रीड़ा

अमुक छन्द में कितने भेद एक गुरु के हैं और कितने भेद दो गुरु के हैं एवं कितने भेद ३ तीन गुरु के हैं इसी तरह कितने भेद एक दो तीन लघु के हैं। इस प्रक्रिया के जानने की विधि का नाम एकद्वयादिलगक्रिया है।

## सेतुः

भूतस्येत्येवं क्रमेण द्रष्टव्यम् ।

उपर्याद्यादिति । इत्थं कृते आद्याद् गुरोः सर्वगुरोरनन्तरमेकद्वित्र्यादीनां गुरुलघूनां क्रिया ज्ञेयेति । अयमाशयः ।

उर्ध्वाङ्के सर्वगुरोः संख्या द्वितीयांके एकगुरोः सख्या तृतीयांके द्विगुरोश्चतुर्थाङ्के सर्वलघोरित्यादि । यथा त्र्यक्षरे सैकानां त्रयाणामेकाकानां न्यासः । अत्राधस्तनमेकांकं द्वितीयैकाके मेलनेन द्वयंकं कुर्यात् ।

## नारायणो

यित्वा द्व्यंकं कुर्यात्, तं तृतीयैकांके संयोज्य त्र्यकं कुर्यादित्येवमुत्तरोत्तरं कुर्यादित्यर्थः । उपान्त्यस्याप्यन्तमेलने प्रयुक्तेऽपवादमाह---उपान्त्यत इति । उपान्त्यपर्यन्तं मेलनं कृत्वा तमन्त्येमेलयित्वैवं प्रत्यावृत्त्येकैकं त्यजन्निवर्तेत विरमेत् । अन्त्यश्च प्रथममेलने सर्वोपरितनः, द्वितीयमेलनावृत्तौ तदधोभावी द्वितीयः, तृतीयावृत्तौ तदधोभावी तृतीय इत्येवमुत्तरोत्तरो ज्ञेयः । उपान्त्यश्चान्त्याधोभावी । प्रतिमेलनावृत्त्येकमेकमङ्कं त्यक्त्वाऽधस्तनान्मेलयेदिति फलितार्थः । एकैकमिति वीप्सया

## बालक्रीड़ा

उसके लिखने के प्रकार जितने वृत्त के वर्ण हैं उनमें एक और मिला कर ऊपर एवं नीचे कर के रखे । फिर ऊपर नीचे के क्रम से रखे हुए इन वर्णों में १ २ ३ आदि के अनुसार ऊपर वाले को जोड़ दे ।

किन्तु अन्तिम वर्ण के बगल में रहने वाले अंक को त्याग दे यानी उसमें मिलावे नहीं । इन त्यागे हुए अंकों में ऊपर के सर्वगुरु भेद से नीचे तक गिने । इस क्रम में पहला भेद सर्व गुरु का दूसरा भेद एक गुरु का और तीसरा भेद दो गुरु का होता है । इसी प्रकार नीचे से ऊपर की ओर जाने से सबसे नीचे वाला भेद सर्व लघु का उससे ऊपर का दूसरा भेद का एक लघु का उससे ऊपर का तीसरा भेद दो लघु का होता है । ६ ।

**उपान्त्यतो निवर्तेत त्यजेदेकैकमूर्ध्वतः ।**

## सेतुः

तस्य द्व्यंकस्य तृतीयैकांके मेलनात् त्र्यंकं कुर्यात् तं त्र्यंकं चतुर्थांके । उपान्त्यतो मेलनस्य निवर्तितत्वात् । इति मेलनस्य प्रथमावृत्तिः । ततोऽयमंकन्यासः

| | | | |
|---|---|---|---|
| १ स. | ३ ए. | ३ द्वि. | १ स. |
| गु. | गु. | गु. | ल. |

अत्र पुनरधस्तनैकां-

## नारायणी

सर्वाधस्तनांकपर्यन्तं पुनः पुनर्मेलनावृत्तिः कार्येत्यसूसुचत् । सिद्धमाह-उपरीति। एवं कृत आद्यात्प्रथमाद् गुरोः सर्वगुरोर्भेदादुपर्यनन्तरमेकद्वित्र्यादीना लघूनां क्रिया ज्ञेयेति शेषः । प्रथनमेकः सर्वगुरुस्तदधस्तनांकसङ्ख्या एकलघवः तदधोऽङ्कसङ्ख्या द्विलघवः, चतुर्थाङ्कसङ्ख्यास्त्रिलघवः, एवमधोमाव्यंकसङ्ख्यायाश्चतुर्लध्वादिमेदा ज्ञेया इत्यर्थः । एवं प्रथमः सर्वगुरुः, द्वितीयांके एकगुरवः, तृतीयांके द्विगुरवः, चतुर्थाङ्के त्रिगुरवः, इत्यादिप्रकारेण गुरुक्रिया । अत्र त्र्यक्षरे उदाहरणं १.१. १. १.१.

२ अक्षर के वृत्त में बालक्रीडा ४ अक्षर के वृत्त में

| | | |
|---|---|---|
| २ गु. | | |
| | २ गु. | |
| १ | | |
| १ | १ | |

वह मार्ग सुपथ है

| | | | |
|---|---|---|---|
| १ | | | |
| १ | ३ | | |
| १ | २ | ३ | |
| १ | १ | १ | १ |

यह मार्ग सरल है

## उपर्य्याद्याद् गुरोरेवमेकद्वयादिलगक्रिया ॥७॥

### सेतुः

कस्योपरितने द्वय के मेलनात् त्र्यंके कुर्यात् । न तु पुनस्त्र्यंकमुपरितनत्र्यंके मेलयेत् । द्वितीयावृत्तौ पूर्वत्र्यंकस्यैवोपान्त्यत्वान्मेलनाभावात् । तेनायमंक न्यासः फलितः। अत्रैकः सर्वगुरुः । त्रय एकगुरवः त्रयो द्विगुरवः एकः सर्वलघु रित्युपरितनांक क्रमेण भेदसंख्यासिद्धिः। एवं लघुभेदा अपि ज्ञातव्याः

| १ स. | ३ ल. | ३ द्वि. | १ स. |
|---|---|---|---|
| ल. | ल. | ल. | ल. |

एवं सर्ववृत्तेषु । अत्रान्योऽपि-प्रकारो लीलवत्यां द्रष्टव्यः ।

अत्रैककलादिभेदज्ञानार्थं मात्रामेरुप्रस्तारोऽन्यत्रोक्तोऽपि ग्रन्थविस्तर प्रस्तरोऽन्यत्रोक्तोऽपिग्रन्थविस्तर भयादस्माभिर्नलिखितः । ७ ।

### नारायणी

एवं सैकान्वृत्तवर्णसङ्ख्यानेकांकान्न्यसेत् चतुरक्षरे । यथा—१. १. १. १. १. ततोऽधस्तनमेकांके तदुपरिस्थैकांके संयोज्य द्व्यंकं कुर्यात् ।

### बालक्रीडा

३ अक्षर में वृत्त

| | | |
|---|---|---|
| १ | | |
| १ | | |
| १ | २ | |
| | १ | १ |

यह रास्ता सीधा है ।

## नारायणी

यथा—त्र्यक्षरे १. १. २. १. चतुरक्षरे च यथा—१. १. १. २. १. द्वितीयं तृतीये मेलयेत्। आद्ये यथा—१. ३. २. १. द्वितीये यथा १. १. ३. २. १. तृतीयं चतुर्थे मेलयेत्। चतुरक्षरोदाहरणे १. ४. ६. ३. २. १.। त्र्यक्षरे तु न मेलयेत्। उपान्त्यतो निवर्तेतेत्युक्तेः। पुनस्त्र्यक्षरेऽधस्तनं द्वितीये मेलयेत्। यथा—१. ३. ३. १. त्र्यक्षरे एतावतैव सिद्धिः। चतुरक्षरे त्वधस्तनं द्वितीये मेलयेत्। यथा—१. ३. ३. ४. १. द्वितीय तृतीये यथा—१. ४. ६. ४. १. ततो मेलनं नास्ति। एवं त्र्यक्षरे एकः सर्वगुरुर्भेदः, त्रय एकलघवः, त्रयो द्विलघवः, एकः सर्वलघुरिति। गुरुक्रियायां त्वेकः सर्वगुरुः, त्रय एकगुरवः त्रयो द्विगुरवः, एकः सर्वलघुरिति सिद्धम्। चतुरक्षरे एकः सर्वगुरुः—ऽऽऽऽ चत्वारः एकलघवः—।ऽऽऽ (१), ऽ।ऽऽ (२) ऽऽ।ऽ (३), ऽऽऽ। (४), षट् द्विलघवः—।।ऽऽ (१), ।ऽ।ऽ (२), ऽ।।ऽ

## बालक्रीड़ा

५ अक्षर के वृत्त में

| | ५ गुरु | ४ गु. १ ल. | ३ गु. २ ल. | २ गु. ३ ल. | १ गु. ४ ल. | ५ ल. |
|---|---|---|---|---|---|---|
| | १ | | | | | |
| | १ | ४ | | | | |
| | १ | ३ | ६ | | | |
| | १ | २ | ३ | ४ | | |
| | १ | १ | १ | १ | १ | |
| | १ | ५ | १० | १० | ५ | १ |

यह तरीका हलका है।

## नारायणी

(३), ।ऽऽ। (४), ऽ।ऽ। (५), ऽऽ।। (६), चत्वारस्त्रिलघवः—
।।।ऽ (१), ऽ।।। (२), ।ऽ।। (३), ।।ऽ। (४), एकः सर्वलघु
भेदः— ।।।।, एवं गुरुभेदा अपि। एवं सर्वत्र।

इति समलगक्रिया ॥

---

अथार्धसमलगक्रिया।

अर्धसमे तु विशेषः। द्व्यक्षरार्धसमानां षोडशभेदाः पूर्वोक्तरीत्या तन्मध्ये प्रथमषष्ठैकादशषोडशांश्चतुरो भेदान्हापयेत्। यथा—चतुरक्षर-प्रस्तारे एकद्व्यादिलगक्रियायां कृतायां प्रथमान्त्यौ त्याज्यौ समत्वात् षष्ठैकादशौ द्विलघुवृत्तसङ्ख्याबोधके षडङ्के त्याज्यौ। एवं कृते न्यासः ४ ४ ४, ततश्चत्वार्येकलघूनि, चत्वारि द्विलघूनि, चत्वारि त्रिलघूनि वृत्तानीति द्व्यक्षरार्ध-

### बालक्रीड़ा

६ अक्षर के वृत्त में

| | | | | | |
|---|---|---|---|---|---|
| १ | | | | | |
| १ | | | | | |
| १ | ४ | १० | | | |
| १ | ३ | ६ | १० | | |
| १ | २ | ३ | ४ | ५ | |
| १ | १ | १ | १ | १ | १ |

१ ६ १५ २० १५ ६ १

यह प्रकार सुगम है

## नारायणी

समभेदा द्वादश । एवमन्यत्राप्येकद्वयादिलघुकान्समभेदानेकद्वयादिलघुकवृत्त-सङ्ख्याबोधकाङ्के पातयित्वाद्यान्त्यौ च भेदौ त्यक्त्वाऽवशिष्टाङ्करे-कद्वयादिलगक्रियाऽर्धसमेषूह्या ।

इत्यर्धसमलगक्रिया ॥

अथ विषमलगक्रिया ।

विषमेषु तु द्व्यक्षरपादस्य कथ्यते । अष्टाक्षरजातेस्तावदेकद्वयादि-लगक्रियायां पूर्वोक्तरीत्या कृतायां न्यासः । १ । ८ । २८ ५६ । ७० । ५६ । २८ । ८ । १ । अत्र समार्धसमरूपत्वात्प्रस्तारकरणोक्तप्रकारेण षोडश भेदा यथास्थानं पात्याः । तत्र एकलघवो हेयेषु न सन्ति, द्विलघवश्चत्वारस्तदीयेष्टा-विंशत्यङ्के हेयाः, त्रिलघवो हेयेषु न सन्त्येव, चतुर्लघवः सप्तत्यङ्के हेयाः पञ्चलघवस्तु हेयेषु न सन्त्येव, षड्लघवश्चत्वारोऽष्टाविंशत्यङ्के हेयाः, सप्त लघवो न सन्तीति आद्यान्त्यौ चैकाङ्कौ त्याज्यौ । एवं कृते द्व्यक्षरवि-षमस्य एकद्वयादिलगक्रियाङ्क न्यासः—८ । २४ । ५६ । ६४ । ५६ । २४ । ८ । अत्राष्टावेकलघवश्चतुर्विंशतिः द्विलघव इत्यादि पूर्ववत्कथनीयम् । एवमन्येष्वपि विषमेष्वपि ज्ञेयम् ।

इति विषमलगक्रिया ॥

सङ्ग्रहश्लोकः—

छन्दोवर्णमितानुपर्यधरगान्सैकान्मुखाङ्कांल्लिखे—
देकैकं शिरसि त्यजन्नधरगानूर्ध्वेषु संयोजयेत् ।
भेदः सर्वगुरुर्मुखे तदनु चैकद्वयादिलघ्वन्विता
प्रान्ते सर्वलघुः क्रिया लघुगतैवं स्याद् गुरूणामपि ॥

अथ भास्कराचार्योक्तो लगक्रियाप्रकारः ।

भास्कराचार्यैस्तु लीलावत्यां लघुगुरुक्रियायां प्रकारान्तरमभ्यधायि ।

## नारायणी

तदुच्यते—वृत्तपादाक्षरसङ्ख्याङ्कानेकाद्यङ्कानुपरि व्युत्क्रमेण विन्यस्य तदधस्तनानेव क्रमेण न्यसेत् । ततोऽधस्तनेन स्वोपरिस्थो भाज्यः, भागेन लब्धेन तदग्रिमो गुण्यः, तदधस्तनेन च भाज्यः । लब्धेनाग्रिमं गुणयेत्, तदधस्तनेन भागं हरेत्, इत्येवं यावदङ्कसमाप्ति कार्यम् । लब्धाङ्काङ्काश्च क्रमेण स्थाप्याः । एवं कृते लब्धेङ्केषु प्रथमेनैकगुरवो ज्ञेयाः, द्वितोयेन द्विगुरव इत्यादि ज्ञेयम् । इदं षडक्षरपादे गायत्रीवृत्ते योज्यते न्यासः—

| | | | | | |
|---|---|---|---|---|---|
| ६ | ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ | ६ |

अत्रैकेन षण्णां भागे लब्धाः षट्, षड्भिः पञ्चसु गुणितेषु ३० द्वाभ्यां भक्ते लब्धाः १५, एतैश्चतुर्षु गुणितेषु ६० त्रिभिर्भागे लब्धं २०, एभिस्त्रिषु गुणितेषु ६० चतुर्भिर्भागे लब्धं १५, एतैर्द्वयोर्गुणनेन ३० पञ्चभिर्भागे लब्धंयो ६, एतैरेकस्मिन्गुणितं षडेव षड्भिर्भागे लब्धं १, एतेषां क्रमेण विभक्तानां न्यासः—६।१५।२०।१५।६।१ एक गुरवः ६, द्विगुरवः १५, त्रिगुरवः २० चतुगुरवः १५ पञ्चगुरवः ६, सर्वगुरुः सर्वलघुरेकः स्वतः सिद्ध एव । एवमन्यत्रापि योज्यम् । तदाहुर्लीलावतीकाराः—

एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः ।
परः पूर्वेण सङ्गुण्यस्तत्परस्तत्परेण च ॥
एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम् ।
छन्दश्चियुत्तरे छन्दस्युपयोगोऽस्ति तद्विदाम् ॥ इति ।

अथ सूत्रकारोक्तो लगक्रियाप्रकारः ।

अथैकद्वयादिलघुगुरुक्रियासिद्ध्यर्थमेव सूत्रकारोक्तो मेरुप्रस्तारः । तत्र प्रथममेकं चतुरस्रं कोष्ठं लिखेत् । तदध उभयतोऽर्धनिष्क्रान्तं कोष्ठद्वयम् । तदधस्तथैव त्रयम् । तदधस्तथैव चतुष्टयम् । इत्येवं षड्विंशतिकोष्ठलेखनं यावत्कार्यम् । उपरि कोष्ठे एकाङ्को देयः तथा प्रतिपङ्क्ति आद्यन्तकोष्ठेषु

## नारायणी

एकाङ्क एव । तृतीयपंक्तौ मध्यकोष्ठे शून्ये तदुपरिगतकोष्ठद्वयगतं काङ्कावेकीकृत्य द्वयङ्कं न्यसेत् । एवं चतुर्थपंक्तौ मध्यकोष्ठयोरुपरिगतकोष्ठद्वयांकमेकीकृत्य त्र्यंकौ । एवं सर्वत्रोपरितनकोष्ठद्वयाङ्कमेकीकृत्याधस्तनकोष्ठे दद्यात् एवं षड्विंशतिकोष्ठकपंक्ति यावत्कार्यम् । तदुक्तम्—

> आदावेकं लिखेत्कोष्ठं तदधो द्वे तु संलिखेत् ॥
> तदधस्त्रीणि कोष्ठानि एवं रूपेण वर्धयेत् ॥
> आदावन्ते लिखेदेकं मध्यं कोष्ठं च पूरयेत् ।
> लेख्यकोष्ठोपरिप्राप्तैरग्रिमांकेन संयुतैः ॥ इति ॥

| १ |

१ | १ | १ | २

२ | १ | २ | १ | ४ |

३ | १ | ३ | ३ | १ | ८ |

४ | १ | ४ | ६ | ४ | १ | १६

५ | १ | ५ | १० | १० | ५ | १ | ३२ |

६ | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ |

७ | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | १२८ |

८ | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | २५६ |

९ | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ |

१० | १ | १० | ४५ | १२० | २१० | २५२ | २१० | १२० | ४५ | १० | १ | १२०४

११ | १ | ११ | ५५ | १६५ | ३३० | ४६२ | ४६२ | ३३० | १६५ | ५५ | ११ | १ | २०४८

१२ | १ | १२ | ६६ | २२० | ४९५ | ७९२ | ९२४ | ७९२ | ४९५ | २२० | ६६ | १२ | १ | ४०९६

( एवं षड्विंशतिकोष्ठकपंक्ति यावत्पूरणीयम् ॥ )

अत्रोद्धारप्रकारोऽयं मेरोः— अत्र द्विकोष्ठायां द्वितीयपंक्तौ एकाक्षरपादाया उक्ताया लगक्रिया । तृतीयायां द्वितीयपंक्तौ अत्युक्ताया इत्येवं क्रमेण षड्विंशतिजातीनां निवेशः । स चैकाङ्कोपरिगतप्रतिपङ्क्तिगतद्वितीय-

## नारायणी

कोष्ठस्थाङ्केन ज्ञेयः । तत्र द्वितीयपंक्तावेकं सर्वलघु, एकं सर्वगुरूक्तायाम् । तृतीयपङ्क्तावेकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघ्वित्यत्युक्तायाम् । चतुर्थङ्पंक्तावेकं सर्वगुरु, त्रीण्येकलघूनि, त्रीणि द्विलघूनि, एकं सर्वलघ्विति प्रकारेणैकद्वित्र्यादिलघुगुरुक्रिया सर्वेषु ज्ञेयेति सूचितमेरुप्रस्तारः । गुरुलघुसङ्ख्यासूचकत्वात्सूचिः मेरुसस्थानत्वाच्च मेरुरिति ।

इति मेरुप्रस्तारः ॥

अथ पताकाप्रस्तारः ।

अत्र प्रस्तारे कृते सर्वगुरुः कुत्र स्थानेऽस्ति, तदपेक्षयैकन्यूनगुरुः कुत्रास्ति । ततोऽप्येकन्यूनगुरुः कुत्रास्ति, इत्येवं प्रकारे प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्ताराः कथ्यन्ते । यत्सङ्ख्याक्षरप्रस्तारे प्रश्नस्तदक्षरसङ्ख्याकान्कोष्ठानेकाधिकांल्लिखित्वा तेषूद्दिष्टवदेकाङ्कादारभ्योत्तरोत्तरद्विगुणा अङ्का देयाः । ततः प्रथमाङ्केन द्वयादीनां संयोजन कृत्वा द्वयङ्कादधः कोष्ठकान्कृत्वा तेषु संयुक्ताङ्कांल्लिखेत् । अन्तिमेन प्रथमाङ्को न योज्यः । तावत्सङ्ख्यस्य तत्र वृतस्याभावात् । ततो द्वितीयाङ्कं तृतीयकोष्ठाद्यङ्कैरुपान्त्यपर्यन्तैः संयोज्य तृतीयकोष्ठाधः कोष्ठकान् कृत्वा तेषु लिखेत्, द्वितीयाङ्ककोष्ठाधःस्थैरप्यङ्कैस्तृतीयकोष्ठस्थितचतुरङ्कं संयोज्य तस्यामेव पङ्क्तावधो लिखेत्, एवं चतुरङ्कमष्टादिभिः संयोज्याष्टमाङ्काऽधो लिखेत्, तदधोऽपि चतुरङ्काधःपङ्क्तस्थैरष्टमाङ्कं संयोज्य लिखेत् , एवं सर्वत्र यावदङ्कसमाप्ति लेख्यम् । एवं क्रियमाणे यत्र प्रस्तारसङ्ख्याधिकसङ्ख्या पठ्यते सा न लेख्या । एकत्र लिखिता चापरत्र लेखितव्या किन्तु तदग्रिमसङ्ख्यायोगस्तदधःसङ्ख्यायोगो वा कार्यः । एवं सर्वत्र । तथा च प्रथमस्थाने सर्वगुरुः द्वितीयपङ्क्तस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि । एवं तृतीयादिपङ्क्तष्वेकैकगुरुन्यूनप्रस्तारस्थानानि । यद्वा प्रथमः सर्वगुरुर्द्वितीयपङ्-

## नारायणी

क्तावेकलघुस्थानानि, तृतीयपङ्क्तौ द्विलघुस्थानानीत्यादि ज्ञेयम् । तदुक्तम्—

एको द्वावथ चत्वारस्ततोऽष्टाविति वर्धनम् ।
पूर्वं परेण संयोज्य तदधो लेखयेद् बुधः ॥
अन्तिमाङ्कावधि नैव लङ्घयेदत्र कुत्रचित् ।
एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत् ॥

अत्रोदाहरणमेकाक्षरे १ । २ अस्य द्विविकल्पत्वादेकस्थानस्थ एकगुरुः, द्वितीयस्थ एकलघुरिति । एतावतैव सिद्धिः । द्व्यक्षरे यथा —

| | | |
|---|---|---|
| १ | २ | ४ |
| | ३ | |

अत्रैकाङ्कद्व्यङ्कयो संयोजने त्र्यङ्को द्व्यङ्काधो लेख्यः, तस्य चतुर्विकल्पत्वात्तावतैव सिद्धिः । प्रथमस्थानस्थैकः सर्वगुरुः, द्वितीयतृतीयस्थानस्थो एकगुरुरेकलघुर्वा, चतुर्थस्थानस्थः सर्वलघुरिति । त्र्यक्षरे यथा—

| | | | |
|---|---|---|---|
| १ | २ | ४ | ८ |
| | ३ | ६ | |
| | ५ | ७ | |

अत्र पञ्चाङ्कस्य चतुरङ्कयोजनं न कार्यम्, नवमभेदाभावात् । तेन त्र्यङ्कस्य चतुरङ्कस्य संसृष्टौ सप्तषडधो निवेश्या इति ।

चतुरक्षरे पताका यथा—

| | | | | |
|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ |
| | ३ | ६ | १२ | |
| | ५ | १० | १४ | |
| | ९ | ७ | १५ | |
| | | ११ | | |
| | | १३ | | |

## नारायणी

अत्रैकं द्वाभ्यां सह त्रयं द्व्यङ्काधः, एकं चतुर्भिः सह पञ्च त्र्यङ्काधः, एकाष्टयोगे नव पञ्चाधः, द्विचतुर्योगे षट् चतुरधः, द्व्यष्टयोगे दश षडधः, द्विषोडशयोगो न कार्यः । त्रिचतुर्योगे सप्त दशाधः, पञ्चचतुर्योगे नव एकत्र लिखितत्वान्न लेख्याः, त्र्यष्टयोग एकादश सप्ताधः, त्रिषोडशयोगो न कार्यः । पञ्चाष्टयोगे त्रयोदश एकादशाधः, चतुरष्टयोगे द्वादशाष्टाधः, चतुःषोडशयोगो न कार्यः, षडष्टयोगे चतुर्दश द्वादशाधः, दशाष्टयोगो न, सप्ताष्टयोगे पञ्चदश चतुर्दशाधः । अत्र प्रथमस्थाने सर्वगुरुः, द्वित्रिपञ्चनवस्थाने त्रिगुरवः एकलघवो वा, चतुःषट्दशसप्तकादशत्रयोदशसु स्थानेषु द्विगुरवो द्विलघवो वा, अष्टद्वादशचतुर्दशपञ्चदशस्थानेष्वेकगुरवस्त्रिलघवो वा, षोडशस्थाने सर्वलघुरिति योजना ।

पञ्चाक्षरपताका यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ |
| | ३ | ६ | १२ | २४ | |
| | ५ | १० | २० | २८ | |
| | ९ | १८ | १४ | ३० | |
| | १७ | ७ | २२ | ३१ | |
| | | ११ | २६ | | |
| | | १९ | २५ | | |
| | | १३ | २३ | | |
| | | २१ | २७ | | |
| | | २५ | २९ | | |

## नारायणी

षडक्षरपताका यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

अनयोरेकव्द्यादिगुरुस्थानं पूर्ववदेव वक्तव्यम् ।

इति पताकोद्भावनिका ॥

### अथ मात्रामेरुप्रस्तारः

तत्रैककलद्विकलत्रिकलादिषु कति सर्वगुरवः कति चैकगुर्वादय इति बुभुत्सायां तद्बोधार्थं तत्प्रस्तारः । यथा--उपर्येककोष्ठं लिखित्वा

## नारायणी

तदधः कोष्टद्वययुतं षङ्क्तिद्वयं तदधः कोष्ठत्रययुतं षङ्क्तिद्वयं ततः कोष्ठचतुष्टययुतं पङ्क्तिद्वयं इत्येवंरूपेण यावदिच्छमेकैकं कोष्ठं वर्धयित्वा ङ्क्तिद्वयं द्वयं लेख्यम् । एवं कृते उपरि कोष्ठके एकाङ्को देयः सर्वपङ्क्त्यन्तकोष्ठे च स एव देयः, पङ्क्त्यादिकोष्ठेषु एकान्तरेण द्व्यादयोऽङ्का वृद्ध्या देयाः । यथा—प्रथमपङ्क्तिप्रथमकोष्ठे

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | १ | | | | | | | | १ |
| २ | १ | | | | | | | | २ |
| ३ | २ | १ | | | | | | | ३ |
| ४ | १ | ३ | १ | | | | | | ५ |
| ५ | ३ | ४ | १ | | | | | | ८ |
| ६ | १ | ६ | ५ | १ | | | | | १३ |
| ७ | ४ | १० | ६ | १ | | | | | २१ |
| ८ | १ | १० | १५ | ७ | १ | | | | ३४ |
| ९ | ५ | २० | २१ | ८ | १ | | | | ५५ |
| १० | १ | १५ | ३५ | २८ | ९ | १ | | | ८९ |
| ११ | ६ | ३५ | ५६ | ३६ | १० | १ | | | १४४ |
| १२ | १ | २१ | ७० | ८४ | ४५ | ११ | १ | | २३३ |
| १३ | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | | ३७७ |
| १४ | १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| १५ | ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

प्रथमाङ्कः, द्वितीयपङ्क्त्याद्यकोष्ठे द्वितीयाङ्कः, तृतीयपङ्क्त्याद्ये एकाङ्कः, चतुर्थपङ्क्त्याद्ये त्र्यङ्कः, तत एकः, ततश्चतुष्टयमिति क्रमेणाद्यकोष्ठपूरणं मति । एवमाद्यन्तकोष्ठपूरणे कृते समानकोष्ठकपङ्क्तिद्वयमध्ये उपरि पङ्क्तिमध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्टद्वयाद्यकोष्टाङ्केन

## नारायणी

तदुपरिस्थितकोष्ठेऽग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्तं दद्यात् द्वितीयपङ्क्ति-मध्येऽन्त्यकोष्ठाङ्कमेकीकृत्य दद्यात्। एवं कोष्ठपूरणे कृते प्रथमकोष्ठे एक-कलस्य न्यासः, द्वितीयपङ्क्तौ द्विकलस्य, तृतीयपङ्क्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्येत्येवं क्रमेण न्यासः। तत्रैककले एक एव सर्वलघुरेकलघुरूपः, द्विकले एकः सर्वगुरुरेकगुरुरूप एकः सर्वलघुर्द्विलघुरूपः। त्रिकले सर्वगुर्वभावाद् द्वावेकगुरू, एकः सर्वलघुः, चतुर्थपङ्क्तौ चतुष्कले सर्वगुर्वात्मक एकः, एकगुर्वात्मकं त्रयं, सर्वलघु-रेकः, पञ्चम्यां पञ्चकलेषु सर्वगुर्वभावाद् द्विगुर्वात्मकं त्रयमेकगुर्वा-त्मकं चतुष्कं सर्वलघुरेकः। षष्ठ्यां षट्कलेषु एकः सर्वगुरुः षट् द्विगु-रवः पञ्चैकगुरवः, एकः सर्वलघुरित्येवं ज्ञेयम्। तत्तत्पङ्क्तयङ्कानेकीकृत्य तत्तत्सङ्ख्या च ज्ञेया। यथा—षटकले एक-षट-पञ्चैकाङ्कानां मेलने त्रयो-दश प्रागुक्ता भेदा भवन्ति। एवमन्यत्र।

इति मात्रामेरुप्रस्तारः॥

---

अथ मात्राखण्डमेरुः।

यद्वा मात्रावृत्तेषु कत्येकगुरवः कति द्विगुरव इत्यादिज्ञानार्थं खण्डमात्रामेरुः कार्यः। यथा—उपर्येकः कोष्ठो लेख्यः, तदधो दक्षिणतो वामतो वातिक्रान्तैककोष्ठकं कोष्ठद्वयवत्पङ्क्तिद्वयम्। तदधस्तथैव कोष्ठ-त्रयवत्पङ्क्तिद्वितयम्। तदधस्तथैव कोष्ठचतुष्टयवत्पङ्क्तिद्वयम्, तदधः कोष्ठपञ्चकोपेतपङ्क्तिद्वयमित्येवंप्रकारेण यावदिच्छं कुर्यात्। एवं कोष्ठेषु लिखितेषु कोष्ठबहिर्निर्गमप्रदेशेऽन्त्यकोष्ठेषु एकद्वि-एकत्र्येकचतुरादि-क्रमेणैकान्तरेणैकोत्तरवृद्ध्याङ्का देयः, द्वितीयप्रदेशेऽन्त्यकोष्ठेषु सर्वत्रैकाङ्का देयाः। मध्यकोष्ठे तु स्वोपरि कोष्ठाङ्केन तदुपरि कोष्ठपुरः स्थित-कोष्ठाङ्कमेकीकृत्यपूर्ववल्लिखेत् तथा—

## बालक्रीडा

६ वर्णों के वृत्त में यह भी एक प्रकार है।

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ४ | ५ | ६ | |
| १ | ३ | ६ | १० | १५ | | |
| १ | ४ | १० | २० | | | |
| १ | ५ | १५ | | | | |
| १ | ६ | | | | | |
| १ | | | | | | |

इसका उलटा प्रकार

| | | | | | | |
|---|---|---|---|---|---|---|
| | | | | | | १ |
| | | | | | ६ | १ |
| | | | | १५ | ५ | १ |
| | | | २० | १० | ४ | १ |
| | | १५ | १० | ६ | ३ | १ |
| | ६ | ५ | ४ | ३ | २ | १ |
| १ | १ | १ | १ | १ | १ | १ |

यह तीसरा प्रकार

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ |
| १ | २ | ३ | ४ | ५ | ६ | |
| १ | ३ | ६ | १० | १५ | | |
| १ | ४ | १० | २० | | | |
| १ | ५ | १५ | | | | |
| १ | ६ | | | | | |
| १ | | | | | | |

## नारायणी

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

अत्र प्रथमपङ्क्तावेकमात्रस्य न्यासः । द्वितीयपङ्क्तौ द्विकलस्य, तृतीयायां त्रिकलस्येत्येवं पूर्ववन्न्यासः । सर्वगुर्वेकगुर्वादिकथनं च पूर्ववदेव कार्यम् । प्रतिपङ्क्तिप्रस्तारसङ्ख्याज्ञानार्थं तत्तत्पङ्क्तिस्थान्सर्वानङ्कानेकीकृत्य सिद्धमङ्कमेकाङ्कात्परतो बहिर्लिखेत् । मात्रामेरौ मात्राखण्डमेरौ च सम्मतिः ।

आदावेकं न्यसेत्कोष्ठं तदधः पङ्क्तियुग्मके ।
द्वौ द्वौ च तदधस्त्रींस्त्रीनेवं रूपेण वर्धनम् ॥
अन्तकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत्सुधीः ।
आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम् ॥
एकान्तरं च वृद्धाङ्कमेवं रूपेण पूरणम् ।
मध्यकोष्ठं ततः प्राज्ञैः पूरणीयं शिरःस्थितैः ॥

**लगक्रियाङ्कसन्दोहे भवेत्संख्या विमिश्रिते।**

सेतुः

अथ प्रस्तारसंख्यारूपं पञ्चमं प्रत्ययमाह-लगक्रियेति । यस्मिन् प्रस्तारं गुरु लघु क्रियायां येऽकाः सिद्धास्तेषां समूहे संयोजिते सति योंक सा संख्या तत्प्रस्तारस्य भवेदित्यर्थः । यथा त्र्यक्षरे गलक्रियायां सिद्धांक एषां संयोजनात्प्रस्तारस्याऽष्टौ भेदाः । अथ प्रकारान्तरेण संख्यामाह

नारायणी

शिरःस्थितोर्ध्वकाद्याङ्कमेकीकृत्य प्रपूरयेत् ।
एवं क्रमेण सिद्धः स्यान्मात्रामेरुर्न संशयः ॥७॥

इति खण्डमात्रामेरुः ॥

---

अथ सङ्ख्या ।

अथ क्रमप्राप्तां संख्यामाख्याति—

लगक्रियायां पूर्वोक्तायां येऽङ्काः सिद्धास्तेषां समूहे मिलिते योजि सति योऽङ्कः सा सङ्ख्या भवेत् । त्र्यक्षरे यथ—१. ३. ३. १. एतेषामे

बालक्रीड़ा

यह चौथा प्रकार

| | | | | | | |
|---|---|---|---|---|---|---|
| | | | | | | १ |
| | | | | | ६ | १ |
| | | | | १५ | ५ | १ |
| | | | २० | १० | ४ | १ |
| | | १५ | १० | ६ | ३ | १ |
| | ६ | ५ | ४ | ३ | २ | १ |
| १ | १ | १ | १ | १ | १ | १ |

## उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥८॥

### सेतुः

उद्दिष्टांकेति । उद्दिष्टस्यये‍ंकास्तेषां समुदाय एकेन सहितः सन् वा अथवा इमां संख्यामुत्पादयेदित्यर्थः । यथा त्र्यक्षरे उद्दिष्टांकाः १२४ ऽ।। एषां संयोजनात्सप्तसंख्या भवति । सा चैकेन सहिताष्टरूपा भवतीति तत्संख्याङ्कः प्रस्तार इति संख्या ॥८॥

### नारायणी

कत्रित्र्येकाङ्कानां मेलनेऽष्टौ प्रस्ताराः । चतुरक्षरे च—१. ४. ६. ४. १. एषामेकचतुःषट्चतुरेकाङ्कानां मेलने षोडश । प्रकारन्तरेण सङ्ख्या-माह—उद्दिष्टेति । पूर्वोक्तानामुद्दिष्टानामङ्कानां सैक एकसहितः समाहारो मेलनम्, अथवेमां सङ्ख्यां जनदेदुत्पादयेत् । तद्यथा—त्र्यक्षरे एकद्वि-चतूरूपा उद्दिष्टाङ्काः सप्त एकमेलनेऽष्टौ सा तस्य सङ्ख्या, चतुरक्षरे च एकद्विचतुरष्टाङ्कमेलने १५ सैका षोडश सा तस्य सङ्ख्या । एवं प्रकारद्वयमन्यत्राप्युन्नेयम् । इदं चोपलक्षणम् । प्रस्तारगणनयापि संख्या-ज्ञानसिद्धेः, प्रथमवृत्तसंख्याद्विगुणोत्तरोत्तरवृत्तसंख्येति सिद्धेश्च । अर्ध-समविषमयोरपि पूर्वोक्तरीत्या लगक्रियोद्दिष्टाङ्कमेलनेन संख्या ज्ञेयेति । सङ्ग्रहपद्यं तु सङ्ख्याध्वनोरेकमेव वक्ष्यते ।

### बालक्रीड़ा

इन चारों प्रकारों से लगक्रियाङ्क १ । ६ । १५ । २० । १५ । ६ । १ मिलता है इन कोष्ठकों से विदित हुआ कि ६ वर्णों के छन्दों में १ छन्द ६ गुरु का होगा । ६ छन्द ५ गुरु और एक लघु वाले होंगे । १५ छन्द ४ गुरु और ३ लघु वाले होंगे २० छन्द ३ गुरु और ३ लघु वाले होंगे ६ छन्द एक गुरु और ५ लघु वाले होंगे एक छन्द ६ लघु वाला अर्थात् सर्वलघु वाला होगा ।

## नारायणी

### अथ सूत्रोक्तः सङ्ख्याप्रकारः

सूत्रे तु संख्याऽऽनयनेऽन्यः प्रकार उक्तः। यथा—यत्सङ्ख्यां जिज्ञासेत तज्जातिनिष्ठाक्षरसङ्ख्याङ्के भूमौ स्थापिते अर्धं नयेत्। अर्धंकरणे भागद्वयस्य कृतत्वाद्या सङ्ख्या लब्धा तां भूमौ पृथक् स्थापयेत्। अवशिष्टार्धसङ्ख्या यदि समा ततस्तस्यामर्धितायां द्वयङ्कस्य लब्धस्य पूर्ववल्लब्धाङ्काधस्तान्न्यासः कार्यः। एवमुत्तरत्र। यदा त्वर्धसंख्या वृत्ताक्षरसंख्यैव वा विषमा, तदार्धीकरणाशक्तेरेकं रूपमपनीय शून्यं पूर्ववद् द्वयङ्कादधः स्थापयेत्। एवमेकपर्यन्तकरणेऽधःस्थितशून्यस्थाने एकांके निधाय द्विगुणयेत्। तौ द्वौ तस्योपरिष्टादर्धस्थाने निधाय तया संख्यया सैव गुणनीया, ततो गुणिताङ्कमुपरिस्थाने निक्षिपेत्; तत्स्थानं यदि शून्यस्य तदा तन्न्यस्तमङ्कं द्विगुणयेत्, यदि त्वर्धस्थानं तदा तयैव संख्यया गुणयेत्, एवमुपरिस्थानपर्यन्ते कृते योऽङ्को जातः स इष्टवृत्तसंख्या ज्ञेयेति। अत्रोदाहरणम्—गायत्रे षट्संख्यायामर्धेऽपनीते द्वयङ्के स्थापिते अवशिष्टास्त्रयस्तेषु रूपमपनीय द्वयङ्काधः शून्यं स्थाप्यम्। यथा—२।० अवशिष्टद्विसङ्ख्यातोऽर्धेऽपनीते शून्याधो द्विसंख्या लेख्या। यथा—२।०।२।. ततोऽवशिष्टं रूपं तदपनीय द्वयङ्काधः शून्यं स्थाप्यम्। यथा—२।०।२।०. अधः शून्ये एकांकं द्विगुणं न्यस्य तं द्वयङ्कमर्धस्थाने स्थितमपनीय तत्स्थाने निधाय तं तावद्गुणं कुर्यात्। ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति तेषामुपरिष्टाच्छून्यस्थाने तं निधाय शून्यस्थानाङ्कत्वाद् द्विगुणयेत्। ततोऽष्टौ भवन्ति। तानप्यर्धस्थाने निधाय तावद्गुणान्कुर्यात्, तेनाष्टावष्टभिर्गुणिताश्चतुःषष्टिर्भवन्ति गायत्र्यां समवृत्तानि। एवं सर्वत्र समवृत्तसंख्या ज्ञेया। सा च तत्र तत्र दर्शितैव। यदा तु शुद्धार्धसमवृत्तसंख्या तयैव गुणनीया सिद्धेऽङ्के समसङ्ख्यां पातयेत्। अवशिष्टा शुद्धार्धसमसंख्या भवति। यथा त्र्यक्षरे समसङ्ख्या ८ तैरेव गुणिताश्चतुःषष्टिस्तन्मध्येऽष्ट-

## नारायणी

स्वपनीतेषु षट्पञ्चाशच्छुद्धार्धसमानि । एवं सर्वत्र । यदा तु तत्तज्जातिषु शुद्धविषमसङ्ख्या जिज्ञासिता तदा सङ्ख्यायां तयैव गुणितायां या सञ्जाता तां पुनस्तयैव गुणयेत् । सिद्धेऽङ्के समार्धसमे अपनीय शिष्टा संख्या शुद्धविषमस्य । यथा—त्र्यक्षरे समानि (८) तैरेव गुणने चतुःषष्टि ६४ पुनरेतयैव तद्गुणने चत्वारि सहस्राणि षण्णवतिः । अङ्कतोऽपि ४०९६ । समार्धसममेलने ६४ एतेष्वपनीतेष्ववशिष्टं ४०३२ इयं शुद्धा विषमसङ्ख्या । यदा तु समार्धसमविषमाणि समुदितानि, तदा समार्धसमे नापनेये । पूर्वैव तत्संख्या । एवमन्यत्राऽपि ज्ञेयम् । यदैतज्जात्यन्तानि कति समवृत्तानि इति संख्याजिज्ञासा तदा विवक्षितप्रान्तछन्दःसमवृत्तसंख्यां द्विगुणयेत् । तन्मध्ये द्वावपनयेत् । शिष्टा विवक्षितजातिपर्यन्तानां समवृत्तसंख्या । यथा चतुरक्षरे षोडश समवृत्तानि तेषां द्वैगुण्ये द्वात्रिंशत् । द्वयोरपनये तदन्तानां सङ्ख्या ३० । एवमुत्कृतेर्भेदा षट्कोटय एकसप्ततिर्लक्षाणि अष्टौ सहस्राणि अष्टौ शतानि चतुःषष्टिश्चेति । अङ्कतोऽपि ६७१०८८६४ । एतद्द्वैगुण्ये एतस्य द्वयोर्हाने च त्रयोदशकोट्यो द्वाचत्वारिंशल्लक्षाः सप्तदशसहस्राणि सप्तशतानि षड्विंशत्यधिकानि । अङ्कतोऽपि १३४२१७७२६ । एतावन्ति सर्वाणि समवृत्तानि । तदुक्तम्—

विवक्षितान्तजातेस्तु भेदा द्विगुणितास्ततः ।
द्विहीनाः सर्वसंख्यायां ते स्युरुक्तादिजा इति ॥८॥
इति सङ्ख्या ॥

---

## बालक्रीड़ा

लगक्रिया के अङ्कों के सन्दोह के समूह के मिश्रित याने मिलित हो जाने पर संख्या होती है । अथवा उद्दिष्ट के अङ्कों के समाहार में समूह में एक संख्या और मिला देने से भी संख्या हो जाती है ॥८॥

संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ।
वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥९॥

सेतुः

अथाध्वयोगमाह—संख्यैवेति । यस्मिन् यस्मिन् प्रस्तारे या या वृत्तसंख्या सा द्विगुणा पश्चादेकेन न्यूना कृता सती सद्भिरध्वा प्रस्तारलेखनाधिकरणदेशः कथित इत्यर्थः । यथा त्र्यक्षरेऽष्टरूपा प्रस्तारसंख्या द्विगुणीकृता षोडश भवन्ति । ताश्चैकेनोनिताः पञ्चदश भवन्तीति पञ्चदशांगुला भूस्तत्प्रस्ताराधारः । अत्रोपपत्ति वक्तुं गुरु लघूनां प्रमाणमाह : वृत्तस्येति । वृत्तप्रस्तारस्य विस्तारतो व्याप्तिरांगुलिकी । अंगुली प्रमाणमस्याः सा । अयमर्थः । अङ्गुलिविस्तारा गुरुलघवः संरूपाः । अधोन्तरालदेशेऽप्यंगुलविस्तारदेशं त्यक्त्वा वृत्तप्रस्तारभेदा लेख्यास्तथा च त्र्यक्षरादौ पञ्चदशाद्यंगुलोऽध्वा स्पष्टो भवति इति । न्यूनाधिकप्रमाणसंभवेऽप्यनुगतस्य शास्त्रार्थत्वादंगुलप्रमाणमुक्तम् , अन्तरालदेशेऽगुलत्यागस्तूद्दिष्टानुसारात् । वस्तुतस्तु गुरुलघूनां यत्प्रमाणं तत्प्रमाणकान्तरालदेशत्याग इतीह विवक्षितं तेन प्रस्ताराधिकरणदेशप्रमाणसंख्यापि तत्प्रमाणगतैवेति ज्ञेयमित्यध्वयोगः ॥९॥

नारायणी

अथाऽध्वयोगः ।

अथाऽध्वयोगमाह—

या समादिवृत्तानां तत्तज्जातिषु संख्या पूर्वमुक्ता सा द्विगुणा एकोनेति सद्भिः प्रस्तारादिज्ञैरध्वा वृत्तप्रस्तारव्याप्यः प्रदेशस्तत्तज्जातिषूक्तः स्वस्वग्रन्थेषु । त्र्यक्षरे यथा संख्याऽष्टरूपा द्विगुणा षोडश एकोना पञ्चदश भवन्ति सोयं तस्य अध्वा पञ्चदशाङ्गुलायां भुवि तद्वृत्तं प्रस्तार्यते इति भावः । चतुरक्षरेऽपि तथाकरणे एकत्रिंशत् स तस्य । एवमर्धसमविषमयोः । उक्तेऽर्थे उपपत्तिमाह—वृत्तस्येति । वृत्तस्य = वृत्तप्रस्तारस्य

## नारायणी

व्यासतो व्याप्तिरङ्गुलिमिता। वृत्ताधश्चाङ्गुलिं कुर्यात्। त्यक्तामिति शेषः। अङ्गुलायामा गुरुलघवः कार्याः, प्रस्तारान्तरालं चाङ्गुलिमितमेव कार्यमित्यर्थः। अत्र चोद्दिष्टाङ्कलेखनाय मध्येऽङ्गुलावस्थापनम्, अङ्गुलन्यूनाधिकपरिमाणानां गुरुलघूनामुद्दिष्टाङ्कानां च लेखनं सम्भवेऽप्यननुगतस्याशास्त्रार्थत्वादगुणमिति सिद्ध्यर्थमङ्गुलिनियमनं कृतं न तु व्यसनिमात्रतया। न च प्रथमप्रस्तारेऽप्युद्दिष्टकरणायोपर्यङ्गुलमितभूमिग्रहे पूर्वत्र द्विगुणा सङ्ख्याऽध्वा स्यात् न त्वेकोनेति वाच्यम्। प्रथमस्य सर्वत्र सर्वगुरुत्वेनैव नियमादुद्दिष्टकरणानपेक्षणात्। न चैवमन्तिमस्यापि सर्वलघुत्वेन ज्ञातत्वाद् द्व्यूना द्विगुणा सङ्ख्याऽध्वा स्यादिति वाच्यम्। कोट्यवधिकप्रस्तारेषु सर्वलघोः सामान्यत अन्त्यत्वज्ञानेऽपि कथितोऽयमिति विशेषाज्ञाने गणनाव्यतिरेकेणापि तावत्सङ्ख्याक इति ज्ञानार्थमुद्दिष्टकरणापेक्षणात्। एतेनैतदपास्तं यत्केचिदाहुः—'षष्ठः' प्रत्ययोऽध्वयोगपरिच्छित्तिः इत्येके सोऽल्पफलत्वात्पुरुषेच्छानुविधायित्वेनानियतत्वाच्च नोक्तः' इति ॥६॥ संख्याध्वनोः संग्रहपद्यम्—

सैकोद्दिष्टाङ्ककूटाल्लगकरणगताङ्कैर्विमिश्रैः परेषां
पूर्वद्वैगुण्यतो वा भवति गणनया प्रस्तृतीनां च संख्या ॥
वृत्ते वृत्तान्तरे चाङ्गुलिपरिमितता स्यात्तदेकेन हीना
सङ्ख्यैव द्विःकृताध्वा विधिरयमुदितो भट्टनारायणेन ॥

इत्यध्वयोगः

## बालक्रीड़ा

छन्द की संख्या को दुगुना करके एक घटा देने से सज्जनों ने अध्वा कहा है। इसका तत्त्व है कि वृत्त के माने यहाँ गुरु एवं लघु हैं अतः प्रकृत में गुरु एवं लघु के आकार की व्याप्ति एक अङ्गुली परिमाण है अतः एक अङ्गुल जगह गुरु एवं लघु के नीचे रहना चाहिए। फिर छन्दों के अङ्कों को लिखे ॥६॥

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वावबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् १०

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे षष्ठोऽध्यायः ।।

## सेतुः

अथ ग्रन्थकृदुपसंहरति—वंशेऽभूदिति । कश्यपमुनेः कुले पव्येक नामा ब्राह्मणोऽभूत्तस्य पुत्रेण केदारेण प्रविरचितमिति सम्बन्धः । प्रशब्दो-ग्रन्थान्तरेभ्योऽतिशयद्योतनार्थः । स चातिशयो लक्षणवैशिष्टयरूपः । पव्येकं स्तौति प्रकटेत्यादि विशेषणैः । शैवसिद्धान्तवेत्ता शिवो देवतास्येति शैवः कायत्रैकादशकाभ्याश्चेत्यत्र हविःसूक्तरूपेऽपि तीर्थे कायशब्द इवात्र सिद्धान्ते देवता तद्धितः । यद्वा शिवस्यायं शैव। शिवप्रतिपादकः स चासौ सिद्धा-

## नारायणी

इत्यध्वयोगः ।

इदानीं निर्व्यूढप्रतिज्ञाभारो ग्रन्थकारः स्वग्रन्थे श्रोतृभिः प्रवृत्ति-विशेषः कार्यं इति सूचनार्थं स्ववंशपित्रादिगुणप्रतिपादनपूर्वकं ग्रन्थकृतिमुपसंहरति—

कश्यपस्य महर्षेर्वंशे गोत्रे प्रकटः प्रसिद्धो गुणसमुदायो यस्य स तादृशः पव्येकाख्यो विप्रो ब्राह्मणोऽभूत् । कीदृक् । शिवो देवता येषां ते शिवपूजकाः शैवास्तत्सिद्धान्तस्य वेत्ता ज्ञाता । शैवागमवेत्तेत्यर्थः तथा वेदानां तत्त्वार्थस्याऽबोधितस्यार्थस्य बोधे ज्ञाने निर्मलतरबुद्धिस्तस्य पव्येकस्य पुत्रः केदारनामा । कीदृक् । शिवचरणयुगलसेवामात्रैकाग्र-

सेतुः

न्तश्चेति कर्मधारयः । अधिकरणाभ्युपगतोऽर्थः सिद्धान्तः । तथा च प्रथमाध्याये न्यायसूत्रं तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति । यत्त्वत्र षष्ठीतत्पुरुष शिवपूजकानां सिद्धान्त इति विग्रहादिति प्राञ्चस्तच्चिन्त्यम् । निपादस्यपत्यधिकरणाविरोधात् ततः शैवसिद्धान्तस्य वेत्तेति शेषषष्ठ्या समासः । एतेन भीष्मः कुरूणां भयशोकहर्त्तेत्याद्युपपन्नम् । एवञ्चेह द्वितीयाश्रितेत्यत्र द्वितीयेति योगविभागात्समास इति दुर्वारवृत्तिर्नादर्त्तव्या । यत्तु जनिकर्त्तुरिति निर्देशात्तृजकाभ्यां कर्त्तरीत्यस्यानित्यत्वात्कर्मषष्ठ्या समासः सूपपाद इति प्राञ्चस्तच्चिन्त्यम् । शेषषष्ठ्या सौत्रप्रयोगोपपत्तावुक्तज्ञापनस्योत्थानासम्भवात् । न्यासकारस्तु तृन्नन्तेन समास इत्याह । न च न लोकेति षष्ठी निषेधः । तृजकाभ्यां कर्त्तरीत्यत्र तृचः सानुबन्धकस्य ग्रहणेन तस्यानित्यत्वज्ञापनात् । एतेन तृन्नन्तेन न समास इति प्राचामुक्तिश्चिन्त्येति दिक् । एवं वेदशास्त्रार्थवेत्तेत्यपि व्याख्येयम् । वेदौ मन्त्रब्राह्मणौ । तथा च श्रुति मंत्रब्राह्मणयोर्वेद इति नामधेयमिति । शास्त्राणि न्यायादीनि तेषां तात्पर्यार्थस्य वेत्तेत्यर्थः । अत्र छेकानुप्रासः शब्दालङ्कारः । गुणगणेति सकृदनेकवर्णसाम्यात् ।

त्र्यम्बकेश्वरपुरीकृतवासादग्निहोत्रिकुलनीरधिचन्द्रात् ।
पुण्यपूर्णपुरुषोत्तमभट्टादुद्बभूव सुकृती हरिभट्टः । १ ।
वेदवाक्यनिचयावचयेन प्रेक्षितो विविधिरिवेह बुधौघैः ।
लोकगीतविमलायतकीर्त्तिः सोऽपि सज्जनमणिर्जयति स्म ।२।
तस्मादुद्भूतकीर्तिः कृतसुकृतभरान्मंत्रतन्त्रस्वतन्त्रः ।
साधूनामग्रगण्यो गददलनविधौ मानवानां शरण्यः ।
काशीक्षेत्राधिवासी हृतकठिनतरारातिषड्वर्गदम्भः ।
श्रीमानापाजिभट्टः सुरयजनरतः शुद्धधीराविरासीत् । ३ ।
सेतुस्तत्तनयेन शैवनगरे सद्वृत्तरत्नाकरे ।
सेतुं भास्करशर्मणा विरचितः पारं बुधानां गणम् ।

## सेतुः

तेनानम्रसुरासुरेन्द्रनिकरव्यालोलमौलिस्खल ।
च्चञ्चच्चञ्चच्चद्रमरीचिरञ्जितपदो देवो रविः प्रीयताम् । ४ ।
तरीतुमचरीकरं यदिह वृत्तरत्नाकरं ।
महीसुमनसामहं मननहेतुसेतुं जडः ।
हरेरिव महोदधौ कवि निबद्धसेतौ स्फुर ।
नयन्तु महिमा गुरोश्चरणयोः समुज्जृम्भताम् । ५ ।
अश्विवह्निहयभूमितवर्षे सद्वसन्तं समये मधुशुक्ले ।
आगतः प्रतिपदीह समाप्तिं सेतुरेष बुधसघमुदेऽस्तु ।

## नारायणी

चेतास्तेन केदारेणाभिरामं मनोज्ञं संक्षेपेणैव लक्ष्यलक्षणयोरभिधानात्, ग्रन्थान्तरेभ्योऽतिशयवत्। वृत्तरत्नाकरनामकं छन्दः लक्षणया छन्दःशास्त्र-प्रकरणं प्रविरचितं कृतम्। यद्यपि 'कर्तरि च' (पा० सू० २-२-१६) इति कर्त्रर्थतृजन्तस्य षष्ठया सह समासो निषिद्धस्तथापि 'जनिकर्तुः' (पा० सू० १-४-३०) इति ज्ञापकेन निषेधस्याऽनित्यताज्ञापनात् शैव-सिद्धान्तवेत्तेति षष्ठीसमासः। केचित् तृन्नन्तेन समासः इति तन्न; तृनो योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा० सू० १-३-६९) इति षष्ठीनिषेधात्। इति सर्वं मनोहरम् ॥१०॥

## बालक्रीड़ा

अध्व योगके बोधक चक्र में तीन अक्षरों वाले छन्द की प्रक्रिया।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | SSS | गणस्थान | ८ | | खाली | १५ | III | गणस्थान |
| २ | | खाली | ९ | SIS | गणस्थान | १६ | | खाली |
| ३ | SII | गणस्थान | १० | | खाली | | | |
| ४ | | खाली | ११ | IIS | गणस्थान | | | |
| ५ | ISS | गणस्थान | १२ | | खाली | | | |
| ६ | | खाली | १३ | SSI | गणस्थान | | | |
| ७ | ISI | गणस्थान | १४ | | खाली | | | |

## सेतुः

इति श्रीमत्कवयान्वयसम्भवाग्निहोत्रिकुलतिलकायमानश्रीमदापाजिभट्टसूनुपराभिधानहरिभास्करविरचितो वृत्तरत्नाकरसेतुः समाप्तिमगात् ।

सम्वत् १९३७ मिति भाद्रपदे शुदि बलदेव ६ षष्ठयां शुक्रवासरे लिखितं दयाकृष्णमिश्रेण गोविन्ददेवस्य मन्दिरे मथुरापुर्याम् ।

भय १ स्वरूप २ गुण ३ लोभ ४ प्रीति करे सब कोय ।
तुलसी प्रीति सराहिये इन चारों बिन होय । रामसुख भण्डारी ।

समाप्तोऽसौ षष्ठोऽध्यायो ग्रन्थश्च मङ्गलं शुभञ्चास्तु ।

## नारायणी

भट्टश्रीनागनाथात्समजनि विबुधश्चाङ्गदेवाख्यभट्टः
प्रासोष्टासौ तनूजं रघुपतिनिरतं भट्टगोविन्दसंज्ञम् ॥
विश्वामित्रान्ववायाम्बुधिविधुरधिकं वर्धते तत्तनूजो
विद्याब्धौ लब्धपारः प्रथितपृथुयशा भट्टरामेश्वराख्यः ॥
नारायणेन सुधिया काश्यां निवसता सता ॥
वृत्तरत्नाकरे टीका तद्भुवा रचिताऽञ्चिता ॥
ग्रन्थेऽस्मिन् गुणगणवत्त्वमुच्यते चे-
त्स्वं कार्यं गुणगणवन्न मन्यते कः ॥
तत्सन्तः शिरसि कृताञ्जलिस्तु याचे-
शोध्यं तत्सदसदिहोदितं मया यत् ॥
याति विक्रमशके द्विखषड्भू ( १६०२ ) सम्मिते सितगकार्तिकरुद्रे ॥
ग्रन्थपूर्तिसुकृतं किल कर्मो रामचन्द्रपदपूजनपुष्पम् ॥

**इति श्रीविद्वन्मुकुटमाणिक्य–श्रीभट्टरामेश्वरसूरिसूनु-नारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां प्रस्ताराध्यायः षष्ठः समाप्तः ।**

## बालक्रीड़ा

जिसके गुण समूह लोक में प्रसिद्ध हैं जो शैव के सिद्धान्तों का जानकार है और वेद के तात्त्विक अर्थों के समझाने में जिसकी मति अतीव विमल है ऐसे पव्येक नामक एक विप्र कश्यप ऋषि के गोत्र में पैदा हुए। उनके पुत्र शिव के चरणों की आराधना में मनको लगानेवाले केदारनें इस अनुपम वृत्तरत्नाकर नामक छन्द को बनाया ॥१०॥

इस प्रकार आचार्यमधुसूदनशास्त्री की कृति वृत्तरत्नाकर के षष्ठ अध्याय की हिन्दी टीका बालक्रीड़ा समाप्त हुई।



समाप्तश्चेद वृत्तरत्नाकरम्।